॥ श्रीः ॥

# श्रीगीतगोविन्दम् ।

## राधाविनोदं च ।



हरिद्वारप्रान्तान्तर्वर्तिलाँखग्रामनिवासि-
पं० मिहिरचंद्रकृत-पद-योजनासहित-
भाषाटीकासमलंकृतम् ।

तदेतत्
श्रीकृष्णदासात्मज-गङ्गाविष्णोः
स्वकीये "लक्ष्मीवेङ्कटेश्वर" मुद्रणालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९८५, शकाब्दाः १८५०.

कल्याण-मुंबई.

# भूमिका

एतच्छ्रीजयदेवकविविरचितं श्रीगीतगोविन्दमहाकाव्यं व्रजमण्डलान्तर्गतश्रीवृन्दावनादिवनविहारिणोर्लीलाविग्रहधारिणोः श्रीलक्ष्मीनारायणाभिन्नयोः श्रीमद्राधाश्रीकृष्णचन्द्रयोः शृङ्गारादिलीलां श्रीजयदेवकवेर्गूढकवित्वञ्च प्रकटयतीति विदितचरम् । परंतु विज्ञा एवैतद्वर्णितभगवल्लीलाऽमृतरसपानं कर्त्तुं प्रभवन्ति, प्रकृतस्वास्य गूढार्थत्वात्; नतु साधारणा जनाः, अत एवम्भूतानेतत्सुधारसवंचितानवलोक्यैतत्सुधारसास्वादानुभवं साधारण्येनेहमानैः "श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्राधिपतिभिः कश्चिज्ज्ञोऽस्य दुरूहग्रन्थस्य भाषोद्धृतयेऽयोजि, ततोप्येतद्गूढतात्पर्यस्य प्रायो भाषायामनुद्धृतत्वेन भाषाप्रियमन्दमतिवञ्चनन्तदवस्थमित्यदस्तैरेव भाषोद्धृतिकृतये मदन्तिके प्रेषितम्--सहैवानेन "राधाविनोद" काव्यमपि प्राथमिकभाषोद्धृतय ईरितम्--मया च यथामति भाषोद्धृतमेतत्काव्यद्वयं शाणोल्लेखनधिया विज्ञचरणयोः समर्प्यते--यत्रयत्र छन्दोभङ्गमसहमानेन ग्रंथकर्त्रा गौरवयोग्ययोः श्रीराधाश्रीकृष्णचन्द्रयोरेकवचनान्ताद्यगौरवपदम्प्रयुक्तम्-तत्रतत्र ग्रन्थकर्त्राशयमनुसरतोक्तश्रीराधाकृष्णसेवाविमलचेतसा-यद्भाषायाम्प्रातिष्ठिकपदमबन्धि--तद्विज्ञैः सोढव्यमिति च तानर्थये--इति शम् ।

काशीस्थराजकीयप्रधानपाठशालोत्तीर्णः,

विज्ञचरणसेवकः--पण्डितामिहिरचन्द्रशर्मा.

॥ श्रीः ॥

# गीतगोविन्दम् ।

भाषाटीकासमेतम् ।

## प्रथमः सर्गः १.

श्रीकृष्णराधाचरणौ नत्वा भक्तिपुरःसरम् ॥
गीतगोविन्दगूढार्थविवृतिर्नृगिरोच्यते ॥ १ ॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं
भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ॥ इत्थं
नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधा-
माधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १ ॥

पद–मेघैः ३ मेदुरम् १ अम्बरम् १ वनभुवः १ श्यामाः १तमाल-द्रुमैः ३ नक्तम् भीरुः १ अयम् १ त्वम् १ एव ऽ तत् ऽ इमम् २ राधे १ गृहम् २ प्रापय क्रि० इत्थम् ऽ नन्दनिदेशतः ऽ चलितयोः ६ प्रत्यध्व-कुञ्जद्रुमम् ऽ राधामाधवयोः ६ जयन्ति क्रि० यमुनाकूले ७ रहः-केलयः १ ॥ १ ॥

योजना–अम्बरं मेघैः मेदुरम् अस्ति,-वनभुवः तमालद्रुमैः श्यामाः वर्तंते, अयं श्रीकृष्णः नक्तं भीरुः अस्ति तत् ( तस्मात् ) हे राधे इमं त्वम् एव गृहं प्रापय इत्थं नन्दनिदेशतः प्रत्यध्वकुंजद्रुमं समस्तेषु मार्गकुञ्जद्रुमेषु चलितयोः राधामाधवयोः यमुनाकूले रहः-केलयः जयंति उत्कृष्टाः सन्तीत्यर्थः ॥ १ ॥

**भाषार्थ**–आकाश मेघोंसे व्याप्त होरहा है, और वनकी भूमि तमालके वृक्षोंसे श्याम होरहीहै और यह श्रीकृष्णचंद्र

रात्रीमें भीरु ( डरपोक ) है. इससे हे राधे ! तुम ही इसको घर पहुँचादे इस प्रकार नन्दकी आज्ञासे मार्गकी कुञ्जोंके वृक्षोंमें गमनकरते हुये जो राधा और कृष्णचंद्र हैं उनकी यमुनाके कूलमें जो एकान्तक्रीडा हैं वे सबसे उत्तम है ॥ यहाँ जिधातु का अभिभव ( तिरस्कार )अर्थ है इससे जो राधाकृष्णचंद्रकी उक्तक्रीडाओंका स्मरण करते हैं उनके सर्वपापोंका तिरस्कार होता है-इसीसे कविने यह श्रीकृष्णचंद्रजीका स्मरणरूप मंगल ग्रंथकी आदिमें लिखा है ॥ १ ॥

**वाग्देवताचरितचित्रितचित्तसद्मा पद्मावतीचरण-**
**चारणचक्रवर्त्ती ॥श्रीवासुदेवरतिकेलिकथासमेत-**
**मेतं करोति जयदेवकविः प्रबन्धम् ॥ २ ॥**

पद-वाग्देवताचरितचित्रितचित्तसद्मा १ पद्मावतीचरणचारण चक्रवर्त्ती १ श्रीवासुदेवरतिकेलिकथासमेतम् २ एतं २ करोति क्रि- जयदेवकविः १ प्रबंधम् ॥ २ ॥

योजना-वाग्देवताचरितचित्रितचित्तसद्मा- पद्मावतीचरणचारण- चक्रवर्ती जयदेवकविः श्रीवासुदेवरतिकेलिकथासमेतम् एतं प्रबंधं करोति ॥ २ ॥

**भाषार्थ**-सरस्वतीके चरित्रोंसे शोभित है चित्तरूपी गृह जि- सका अर्थात् जिसके मनमें सरस्वती आचरणकरती है और लक्ष्मीके चरणोंके संवाहन ( दाबना ) से जो चक्रवर्ती राजाके समान है अर्थात् लक्ष्मीका सेवक है ऐसा जयदेवकवि श्री- वासुदेव ( कृष्ण ) की रतिक्रीडाओंसे युक्त जो यह प्रबंध ( ग्रंथ ) है उसको करता है ॥ २ ॥

यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम् ॥ मधुरकोमलकान्तपदावलिं शृणु तदा जयदेवसरस्वतीम् ॥ ३ ॥

पद–यदिऽ हरिस्मरणे ७ सरसं १ मनः १यदिऽ विलासकलासु ७ कुतूहलम् १ मधुरकोमलकांतपदावलिं २–शृणु क्रि०तदाऽजयदेव-सरस्वतीम् ॥ ३ ॥

योजना––यदि हरिस्मरणे ते मनः सरसं वर्तते––यदि विलास-कलासु कुतूहलम् अस्ति तदा मधुरकोमलकान्तपदावलिं––जयदेवसर-स्वतीं ः ॥ ३ ॥

भाषार्थ–हेभक्तजन ! जा तेरा मन हरिके स्मरणमें अनु-राग ( प्रीति ) सहित है और जो श्रीकृष्णचंद्रजीका विलास और चौसठकलाओंमें कुतूहल( उत्कंठा )है तो मधुर ( सरस ) और कोमल हैं मनोहरपदोंकी पङ्क्ति जिसमें ऐसी जयदेव-कविकी वाणीको श्रवणकर ॥

वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ॥ शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन–स्पर्द्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ४ ॥

पद––वाचः २ पल्लवयति क्रि०उमापतिधरः १ संदर्भशुद्धिं २ गिरां ६ जानीते क्रि०जयदेवः १ एवऽ शरणः १ श्लाघ्यः १ दुरूहद्रुतेः ५ शृङ्गारोत्तरसत्प्रमेयरचनैः ३ आचार्यगोवर्द्धनस्पर्द्धी १ कः १ अपिऽ-नऽ विश्रुतः १ श्रुतिधरः १ धोईकविक्ष्मापतिः १ ॥ ४ ॥

योजना––उमापतिधरः वाचः पल्लवयति जयदेव एव गिरां सन्दर्भ-

शुद्धिं जानीते-शरणः दुरूहद्रुतेः श्लाघ्यः शृङ्गारोत्तरसत्प्रमेयरचनैः आचार्यगोवर्द्धनस्पर्द्धी कः अपि न विश्रुतः धोईकविक्ष्मापतिः श्रुतिधरः आसीत् ॥ ४ ॥

**भाषार्थ**-उमापतिधरनामा कवि वाक्यके विस्तारमें श्रेष्ठ हुआ, गुणोंमें नहीं, और जयदेव ही अर्थ और शब्द दोनोंसे वाक्योंको रचनाकी शुद्धिको जानता है अन्य कोई कवि नहीं जानता, शरणनामा कवि कठिन ग्रंथके भी शीघ्र उच्चारण करनेसे श्लाघाकरनेयोग्य है, और शृंगाररस है प्रधान जिनमें ऐसे उत्तमवचनोंके रचनाओंसे आचाय गोवर्द्धनकी स्पर्द्धा करनेवाला कोई, भी कवि विख्यात न हुआ, अर्थात् उसने शृंगार प्रधान ही ग्रंथ रचे-और धोईनामा क्ष्मापति ( महाराजा ) श्रवण करनेसे ही धारण करनेसे प्रसिद्ध हुआ अर्थात् सुननेसे ही समझसकता था ॥ ४ ॥

**अथ प्रथमप्रबंधो मालवरागेण रूपकतालेन गीयते १॥**

**प्रलयपयोधिजले धृतवानसि वेदम्॥विहितवहित्रचरित्रमखेदम्॥केशव धृतमीनशरीर जय जगदीश हरे ॥ १ ॥**

पद-प्रलयपयोधिजले ७ धृतवान् १ असि क्रि-वेदम् २ विहितवहित्रचरित्रम् २ अखेदम् २ केशव १ धृतमीनशरीर १ जय क्रि॰ जगदीश १ हरे ॥ १ ॥

योजना-हे केशव हे धृतमीनशरीर हे हरे यतः त्वं प्रलयपयोधिजले विहितवहित्रचरित्रम्-अखेदं यथा स्यात्तथा वेदं धृतवान् असि अतः त्वं जय उत्कर्षेण वर्द्धस्वेत्यर्थः ॥ १ ॥

**भाषार्थ**—भक्तोंके अनुग्रह और विघ्ननिवृत्तिके लिये प्रथम दशअवतारोंका वर्णन करते हैं हे मीनशरीरधारी ! हे केशव ! हे हरे ! जिससे आपने प्रलयसमुद्रके जलमें डूबेहुए वेदोंको विना परिश्रम और समुद्र तरनेकी नौकारूप होकर धारण किया अर्थात् वेदोंकी ( रक्षा की ) इससे आपकी जय हो अर्थात् बडाईकी वृद्धि हो ॥ १ ॥

**क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ॥ धरणिधरणकिणचक्रगरिष्ठे ॥ केशव धृतकच्छपरूप जय जगदीश हरे ॥ २ ॥**

पद—क्षितिः १ अतिविपुलतरे ७ तव ६ तिष्ठति क्रि० पृष्ठे ७ धरणिधरणकिणचक्रगरिष्ठे ७ केशव १ धृतकच्छपरूप १ जय क्रि० जगदीश १ हरे १ ॥ २ ॥

योजना—हे केशव हे ! धृतकच्छपरूप ! हे जगदीश ! हे हरे—अतिविपुलतरे धरणिधरणकिणचक्रगरिष्ठे तव पृष्ठे क्षितिः यतः तिष्ठति अतस्त्वं जय ॥ २ ॥

**भाषार्थ**—हे कच्छपरूपधारी ! हे केशव ! हे जगदीश ! हे हरे ! पृथिवीके धारणकरनेसे पडेहुए ठट्टेके चक्रसे गरिष्ठ ( भारी ) आपके पृष्ठपर जिससे पृथिवी टिकती है इससे आपकी जय हो २

**वसति दशनशिखरे धरणी तव लग्ना ॥ शशिनि कलङ्ककलेव निमग्ना ॥ केशव धृतसूकररूप जय जगदीश हरे ॥ ३ ॥**

पद—वसति क्रि०दशनशिखरे ७ धरणिः १ तव ६ लग्ना १

शशिनि ७ कलङ्ककला १ इवऽ निमग्ना १ केशव १ धृतसूकररूप १ जय क्रि०जगदीश १ हरे १ ॥ ३ ॥

योजना—हे केशव हे धृतसूकररूप हे जगदीश हे हरे यतः तव दशनशिखरे शशिनि निमग्ना कलङ्ककला इव धरणिः वसति अतः त्वं जय ॥ ३ ॥

**भाषार्थ**—हे सूकररूपधारि ! हे केशव ! हे जगदीश ! हे हरे जिससे आपके दांतोंकी शिखरपर चंद्रमामें कलंककी कलाके समान लगी हुयी पृथिवी वसती है इससे आपकी जय हो अर्थात् आपका उत्कर्ष बढो ॥ ३ ॥

तव करकमलवरे नखमद्भुतशृङ्गम् ॥ दलित-
हिरण्यकशिपुतनुभृङ्गम् ॥केशव धृतनरहरिरूप
जय जगदीश हरे ॥ ४ ॥

पद—तव ६ करकमलवरे ७ नखम् १ अद्भुतशृङ्गम् १ दलितहिरण्यकशिपुतनुभृङ्गम् १ केशव १ धृतनरहरिरूप १ जय क्रि०जगदीश १ हरे १ ॥ ४ ॥

योजना—हे केशव हे धृतनरहरिरूप हे जगदीश हे हरे यतः तव करकमलवरे अद्भुतशृङ्गम् दलितहिरण्यकशिपुतनुभृङ्गम् नखम् अस्ति अतः त्वं जय ॥ ४ ॥

**भाषार्थ**—हे नृसिंहरूपधारी ! हे केशव ! हे जगदीश ! हे हरे ! जिससे आपके श्रेष्ठ करकमलमें अद्भुत है अग्रभाग जिसका और नष्ट किया है हिरण्यकशिपुदैत्यका तनु ( शरीर ) रूप भ्रमर जिसने ऐसा नख है इससे आपकी जय हो ॥ ४ ॥

छलयसि विक्रमणे बलिमद्भुतवामन ॥ पदनखनी-

**रजनितजनपावन ॥ केशव धृतवामनरूप जय जगदीश हरे ॥ ५ ॥**

पद—छलयसि क्रि० विक्रमणे ७ बलिम् २ अद्भुतवामन १ पदनखनीरजनितजनपावन १ केशव १ धृतवामनरूप १ जय क्रि० जगदीश १ हरे १ ॥ ५ ॥

योजना—हे अद्भुतवामन हे पदनखनीरजनितजनपावन हे केशव हे धृतवामनरूप हे जगदीश हे हरे यतः त्वं विक्रमणे बलिं छलयसि अतः त्वं जय ॥ ५ ॥

**भाषार्थ—हे अपने चरणोंके गंगारूपजलसे जनोंको पवित्र करनेवाले अद्भुतवामन ! वामन रूपधारी ! केशव ! जगदीश ! हे हरे ! आप चरणोंके गमन करनेमें ही जिससे बलिराजाको छलते हो इससे आपकी जय हो ॥ ५ ॥**

**क्षत्रियरुधिरमये जगदपगतपापम् ॥ स्नपयसि पयसि शमितभवतापम् ॥ केशव धृतभृगुपतिरूप जय जगदीश हरे ॥ ६ ॥**

पद—क्षत्रियरुधिरमये ७ जगत् २ अपगतपापम् २ स्नपयसि क्रि० पयसि ७ शमितभवतापम् २ केशव १ धृतभृगुपतिरूप १ जय क्रि० जगदीश १ हरे १ ॥ ६ ॥

योजना हे केशव हे धृतभृगुपतिरूप हे जगदीश हे हरे यतः त्वं क्षत्रियरुधिरमये पयसि अपगतपापं शमितभवतापं जगत् स्नपयसि अतः त्वं जय ॥ ६ ॥

**भाषार्थ—हे परशुरामरूपधारी केशव ! हे जगदीश ! हे हरे ! जिससे आप क्षत्रियोंके रुधिररूप जलमें नष्ट हुआ है पाप**

जिसका, और शांत ( दूर ) किया है संसाररूप दुःख जिसका ऐसे जगत्को स्नान कराते हैं इससे आपकी जय हो ॥ ३ ॥

**वितरसि दिक्षु रणे दिक्पतिकमनीयम् ॥ दश-मुखमौलिबलिं रमणीयम् ॥ केशव धृतरघुपति-रूप जय जगदीश हरे ॥ ७ ॥**

पद—वितरसि क्रि० दिक्षु ७ रणे ७ दिक्पतिकमनीयम् २ दश-मुखमौलिबलिं २ रमणीयम् २ केशव १ धृतरघुपतिरूप १ जय क्रि० जगदीश १ हरे ७ ॥

योजना—हे केशव हे धृतरघुपतिरूप हे जगदीश हे हरे यतः त्वं रणे कमनीयं रमणीयं दशमुखमौलिबलिं दिक्षु वितरसि अतः त्वं जयः ७॥

भाषार्थ—हे रामचंद्ररूपधारी केशव ! हे जगदीश ! हे हरे ! जिससे आप दिशाओंके अधिपति इंद्र आदि देवताओंकी इच्छाका विषय प्रिय ( और रमणीय रावणके मस्तकोंकी बलि [ भेंट ] को संग्रामके विषय दिशाओंमें देते हो अर्थात् रावणके शिरोंको दशदिशाओंमें फेंकते हो इससे आपकी जय हो ॥ ७ ॥

**वहसि वपुषि विशदे वसनं जलदाभम् ॥ हलहति-भीतिमिलितयमुनाभम् ॥ केशव धृतहलधररूप जय जगदीश हरे ॥ ८ ॥**

पद—वहसि क्रि—वपुषि २ विशदे ७ वसनं ७ जलदाभम् २ हल-हतिभीतिमिलितयमुनाभम् २ केशव १ धृतहलधररूप १ जय क्रि० जगदीश १ हरे १ ॥

योजना-हे केशव हे धृतहलधररूप हे जगदीश हे हरे यतः त्वं विशदे वपुषि जलदाभम् हलहतिभीतिमिलितयमुनाभं वसनं वहसि अतः त्वं जय ॥ ८ ॥

**भाषार्थ**-हे बलदेवरूपधारी केशव ! हे जगदीश ! हे हरे! जिससे आप मेघके समान है कांति जिसकी और हलके आघातकी भीतिसे प्राप्त हुयी यमुनाजीके समान है प्रकाश जिसका ऐसे नील वस्त्रको अपने शुक्ल शरीरके ऊपर धारण करते हो ऐससे आपकी जय हो ॥ ८ ॥

**निन्दसि यज्ञविधेरहह श्रुतिजातम् ॥ सदयहृदय दर्शितपशुघातम् ॥ केशव धृतबुद्धशरीर जय जगदीश हरे ॥ ९ ॥**

पद-निन्दसि क्रि०यज्ञविधेः ६ अहहऽ श्रुतिजातम् २ सदयहृदय-दर्शितपशुघातम् २ केशव १ धृतबुद्धशरीर १ जय क्रि० जगदीश १ हरे १ ॥ ९ ॥

योजना-हे केशव हे धृतबुद्धशरीर हे जगदीश हे हरे अहह यज्ञविधेः सदयहृदयदर्शितपशुघातं श्रुतिजातं निन्दसि त्वं जय ॥९॥

**भाषार्थ**-हे बुद्धिशरीरधारी केशव ! हे जगदीश ! हे हरे ! अहो ! दयासहितहृदयसे यज्ञसंबंधी विधिको प्रति पादन करने वाली श्रुतियोंमें पशु हिंसाके दोषको दिखाते हुए निंदा करते हो ऐसे आपकी जय हो ॥ ९ ॥

**म्लेच्छनिवहनिधने कलयसि करवालम् ॥ धूम-केतुमिव किमपि करालम् ॥ केशव धृतकल्किशरीर जय जगदीश हरे ॥ १० ॥**

पद—म्लेच्छनिवहनिधने ७ कलयसि क्रि० करवालम् २ धूमकेतुम् २ इवऽ कम् १ अपि करालम् २ केशव धृतकल्किशरीर १ जय क्रि० जगदीश १ हरे १ ॥ १० ॥

योजना—हे केशव हे धृतकल्किशरीर हे जगदीश हे हरे त्वं म्लेच्छनिवहनिधने धूमकेतुम् इव कम् अपि करालं करवालं कलयसि अतः त्वं जय ॥ १० ॥

**भाषार्थ**—हे कल्की(असवारके)अवतारधारी केशव ! हे जगदीश ! हेहरे ! आप धमकेतु (उत्पातका तारा)के समान कहनेके अशक्य भयानक खड्गको म्लेच्छोंके समूहके मारनेके लिये धारण करते हो ऐसे आपकी जय हो ॥ १० ॥

**श्रीजयदेवकवेरिदमुदितमुदारम् ॥ शृणु सुखद शुभदं भवसारम् ॥ केशव धृतदशविधरूप जय जगदीश हरे ॥ ११ ॥**

## इति श्रीगीतगोविन्दे प्रथम प्रबंधः ॥ १ ॥

पद—श्रीजयदेवकवेः ६ इदम् २ उदितम् २ उदारम् २ शृणु क्रि—सुखदम् २ शुभदम् भवसारम् २ केशव १ धृतदशविधरूप १ जय क्रि० जगदीश १ हरे ॥ ११ ॥

योजना—हे केशव हे धृतदशविधरूप हे जगदीश हे हरे श्रीजयदेवकवेः उदितम् उदारं सुखदं शुभदं भवसारम् इदं त्वं शृणु ॥ ११ ॥

**भाषार्थ**--धृतवान् आसि [ धरता है ] इत्यादि वर्तमान कालके प्रयोगोंके देनेसे भगवान् और उनकी लीलाको नित्य दिखाया इस प्रकार तिस २ अवतारके गुणोंसे स्तुति करके कवि अपनी की स्तुतिको अवतारधारी भगवान्के अर्पण करते

हैं-हे दशप्रकारके अवतारधारी केशव ! जगदीश ! हे हरे ! श्रीजयदेवकविके कहेहुये मनोहर--कल्याण और सुखके दाता और संसारमें सार इस गीतको आप श्रवण करो अर्थात् यह गीत आपके अर्पण हैं और आपकी जय हो ॥ ११ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ प्रथमः प्रबन्धः ॥ १ ॥

---

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ॥ पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥१॥

पद-वेदान् २ उद्धरते ४ जगत् २ निवहते ४ भूगोलम् २ उद्बिभ्रते ४ दैत्यम् २ दारयते ४ बलिम् २ छलयते ४ क्षत्रक्षयम् २ कुर्वते ४ पौलस्त्यम् २ जयते ४ हलम् २ कलयते ४ कारुण्यम् २ आतन्वते ४ म्लेच्छान् २ मूर्च्छयते ४ दशाकृतिकृते ४ कृष्णाय ४ तुभ्यम् ४ नमः ऽ ॥ १ ॥

योजना-वेदान् उद्धरते-जगत् निवहते-भूगोलम् उद्बिभ्रते-दैत्यं दारयते-बलिं छलयते-क्षत्रक्षयं कुर्वते-पौलस्त्यं जयते-हलं कलयते-कारुण्यम् आतन्वते-म्लेच्छान् मूर्च्छयते-दशाकृतिकृते कृष्णाय तुभ्यं नमः--करोमीति शेषः ॥ १ ॥

**भाषार्थ**--अब उक्त अवतारोंकाही संक्षेपसे वर्णन करते हैं मीन रूपसे वेदोंका उद्धार करनेवाले और कच्छपरूपसे जगत् (भूमण्डल) के धारी और वराहरूपसे भूगोलके धारी औ नृसिंहरूपसे हिरण्यकशिपु दैत्यके नाशक और वामनरूपसे बलिको

छलनेहारे और परशुरामरूपसे क्षत्रियोंके नाशकर्ता और रामचंद्र रूपसे रावणको जीतनेहारे और बलदेवरूपसे हलके धारी और बुद्धरूपसे अत्यंत दयाशील और कल्कीरूपसे म्लेच्छोंके नाशक इस प्रकार दश अवतारोंके धारी हे श्रीकृष्ण आपको ! नमस्कार है ॥ १ ॥

## अथ द्वितीयप्रबन्धो गुर्जरीरागेण प्रतिमंठताले गीयते ॥ २ ॥

श्रितकमलाकुचमण्डल धृतकुण्डल ए ॥ कलित-
ललितवनमाल जय जय देव हरे ॥ १ ॥

पद—श्रितकमलाकुचमण्डल१ धृतकुण्डल १ एऽ कलितललितवन-माल १ जय क्रि०जय क्रि०देव १ हरे ॥ १ ॥ १ ॥

योजना०ए श्रितकमलाकुचमण्डल हे धृतकुण्डल हे कलितललित-वनमाल हे देव हे हरे त्वं जय त्वं जय ॥ १ ॥

भाषार्थ—धारण किया है लक्ष्मीके कुचाओंका मंडल जिसने और धारे हैं कुंडल जिसने और धारण की है सुंदर वन-माला जिसने ऐसे हे देव ! हे हरे ! आपकी जय अर्थात् भक्तोंके पक्षपातमें वृद्धि हो निदान तुम सबसे अधिक भक्तोंका पक्षपात करो ॥ १ ॥

दिनमणिमण्डलमण्डन भवखण्डन ए ॥मुनिजन-
मानसहंस जय जय देव हरे ॥ २ ॥

पद—दिनमणिमण्डलमण्डन १ भवखण्डन१एऽ मुनिजनमानसहंस१ जय क्रि०जय क्रि०देव १ हरे १ ॥ २ ॥

योजना--ए दिनमणिमण्डलमण्डन हे भवखण्डन हे मुनिजनमानस-हंस हे देव हे हरे त्वं जय ॥ २ ॥

भाषार्थ—हे सूर्यमंडलके भूषण ! हे भक्तोंकें संसारनाशक ! हे मुनिजनोंके मानसरोवरके हंसतुल्य ! हे देव ! हे हरे आपकी जय हो जय हो ॥ २ ॥

**कालियविषधरगञ्जन जनरञ्जन ए ॥ यदुकुलनलिन-दिनेश जय जय देव हरे ॥ ३ ॥**

पद--कालियविषधरगञ्जन १ जनरञ्जन १ एऽ यदुकुलनलिनदिनेश १ जय क्रि० जय क्रि० देव १ हरे १ ॥ ३ ॥

योजना--ए कालियविषधरगञ्जन हे जनरञ्जन हे यदुकुलालिन-दिनेश हे देव हे हरे त्वं जय २ ॥ ३ ॥

भाषार्थ—हे कालियसर्पके विषके नाशक ! हे जनोंको आनंदके दाता ! हे कमलरूप यदुकुलके सूर्य ! हे देव ! हे हरे ! आपकी जय हो जय हो ॥ ३ ॥

**मधुमुरनरकविनाशन गरुडासन ए ॥ सुरकुल-केलिनिदान जय जय देव हरे ॥ ४ ॥**

पद--मधुमुरनरकविनाशन १ हे गरुडासन १ एऽ सुरकुलकेलि-निदान १ जय क्रि० जय क्रि० देव १ हरे ॥ ४ ॥

योजना--ए मधुमुरनरकविनाशन हे गरुडासन हे सुरकुलकेलि-निदान हे देव हे हरे त्वं जय ॥ ४ ॥

भाषार्थ—हे मधु मुर नरक इन दैत्योंके नाशक ! हे गरुडा-सन ! हे देवताओंके समूहकी क्रीडाके कारण ! हे देव । हे हरे आपकी जय हो जय हो ॥ ४ ॥

अमलकमलदललोचन भवमोचन ए ॥ त्रिभुवन-
भवननिधान जय जय देव हरे ॥ ५ ॥

पद--अमलकमललोचन १ भवमोचन १ एऽ त्रिभुवनभवननिधान जय क्रि०जय क्रि०देव १ हरे १ ॥ हरे १ ॥ ५ ॥

योजना--ए अमलकमलदललोचन हे भवमोचन--हे त्रिभुवनभवन-निधान हे देव हे हरे त्वं जय जय ॥ ५ ॥

भाषार्थ--हे निर्मलकमलके दलोंके समान नेत्रधारी ! हे संसारके बंधनको छुडानेहारे ! हे तीनों भुवनरूप घरके निधान ! (कोशवा खजाना) हे देव! हे हरे! आपकी जय हो जय हो॥ ५ ॥

जनकसुताकृतभूषण जितदूषण ए ॥ समरशमित-
दशकण्ठ जय जय देव हरे ॥ ६ ॥

पद--जनकसुताकृतभूषण १ जितदूषण १ एऽ समरशमितदशकंठ १ जय क्रि० जय क्रि० देव हरे १ ॥ ६ ॥

योजना--ए जनकसुकृतभूषण हे जितदूषण हे समरशमितदशकंठ हे देव हे हरे त्वं जय जय ॥ ३ ॥

भाषार्थ--हे सीताजीको भूषितकरनेवाले ! हे दूषणनामा दैत्यको जीतनेवाले ! हे संग्राम ( युद्ध ) में रावणको शांत (नष्ट) करनेवाले ! हे देव ! हे हरे ! आपकी जय हो जय हो ॥ ६ ॥

अभिनवजलधरसुन्दर धृतमन्दर ए ॥ श्रीमुख-
चन्द्रचकोर जय जय देव हरे ॥ ७ ॥

पद--अभिनवजलधरसुंदर १ धृतमंदर १ एऽ श्रीमुखचन्द्रचकोर १ जय क्रि० जय क्रि० देव १ हरे १ ॥ ७ ॥

योजना--ए अभिनवजलधरसुंदर हे धृतमंदर हे श्रीमुखचन्द्रचकोर हे देव हे हरे त्वं जय जय ॥ ७ ॥

भाषार्थ--हे नवीनमेघके समान सुंदर! हे मंदराचलके धारी! हे चन्द्रमाके तुल्य लक्ष्मीमुखके चकोर! हे देव हे! हे हरे! आपकी जय हो जय हो ॥ ७ ॥

तव चरणे प्रणता वयमिति भावय ए ॥ कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ ८ ॥

पद--तव चरणे ७ प्रणता० १ वयम् १ इतिऽ भावय क्रि० एऽ कुरु क्रि०कुशलं १ प्रणतेषु ७ जय क्रि०जय क्रि०देव १ हरे १ ॥ ८ ॥

योजना--हे देव वयं तव चरणे प्रणताः स्मः इति त्वं भावय प्रणतेषु कुशलं कुरु ए हे हरे त्वं जय जय ॥ ८ ॥

भाषार्थ--हे परमेश्वर! हम आपके चरणोंमें प्रणाम करते हैं और तुम इस प्रकार पुणत हमारा कुशल करो और हे देव! हे हरे! आपकी जय हो अर्थात् प्रणाम करनेवाले हम लोगोंका कल्याण करो आपका जय हो ॥ ८ ॥

श्रीजयदेवकवेरिदं कुरुते मुदम् ॥ मंगलमुज्ज्वल-गीतं जय जय देव हरे ॥ ९ ॥

इति श्रीगीतगोविन्दे द्वितीयः प्रबन्धः ॥ २ ॥

पद--श्रीजयदेवकवेः ६ इदम् कुरुते क्रि०मुदम् २ मंगलम् १ उज्ज्वलगीतं १ जय क्रि--जय क्रि०देव १ हरे १ ॥ ९ ॥

योजना--श्रीजयदेवकवेः इदं मंगलम् उटज्वलगीतं मुदं कुरुते हे देव हे हरे त्वं जय जय ॥ ९ ॥

भाषार्थ--हे देव! हे हरे! श्रीजयदेवकविका कहा यह मंगल-मय निर्मलगीत जगत्को आनंद करता है हे भगवन्! आपकी जय हो जय हो ॥ ९ ॥

इति श्रीतगोविंदभाषाविवृतौ द्वितीयः प्रबंधः ॥ २ ॥

पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य ॥ व्यक्तानुरागमिव खेलदनङ्गखेद-स्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ १ ॥

पद-पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितम् १उरः१ मधुसूदनस्य ६ व्यक्तानुरागम् १ इव ऽ खेलदनंगखेदस्वेदाम्बुपूरम् १ अनुपूरयतु क्रि० प्रियं २ वः ३ ॥ १ ॥

योजना-मधुसूदनस्य-पद्मापयोतरतटीपरिरंभलग्नकाश्मीरमुद्रितं खेलदनंगखेदस्वेदांबुपूरं व्यक्तानुरागम् इव उरः वः ( युष्माकं ) प्रियम् अनुपूरयतु ॥ १ ॥

**भाषार्थ**-लक्ष्मीकी स्तनोंके तटका जो स्पर्श उससे लगे हुए केशरसे चिह्नयुक्त और लक्ष्मीकी छातीपर खेलतेहुए कामदेवकी रतिक्रीडाके परिश्रमसे पसीनेके जलका प्रवाह है जिसमें, और प्रकट हुआ है मानो अनुराग ( प्रीति ) जिसमें ऐसा मधुसूदन ( श्रीकृष्ण ) भगवान्‌का वक्षःस्थल-आपके प्रिय ) ( प्रेम ) को पूर्ण करो ॥ १ ॥

वसंते वासन्तीकुसुमसुकुमारैरवयवै-र्भ्रमंतीं कांतारे बहुविहितकृष्णानुसरणाम् ॥ अमन्दं कंदर्पज्वर-जनितचिंताकुलतया चलद्बाधां राधां सरसमिदमूचे सहचरी ॥ २ ॥

पद-वसन्ते ७ वासंतीकुसुकुमारैः ३ अवयवैः ३ भ्रमन्तीम् २ कांतारे ७ बहुविहितकृष्णानुसरणाम् २ अमन्दम् २ कन्दर्पज्वरजनित-

चिंताकुलतया ३ चलद्बाधाम् २ राधाम् २ सरसम् २ इदम् २ ऊचे क्रि० सहचरी १ ॥ २ ॥

योजना--काचित् सहचरी ( सखी ) वसन्ते वासंतीकुसुमसुकुमारैः अवयवैः उपलक्षितां कांतारे भ्रमंतीं बहुविहितकृष्णानुसरणाम्-- अमंदं कंदर्पज्वरजनितचिंताकुलतया चलद्बाधां राधां प्रति सरसम्-- इदं ( वक्ष्यमाणम् ) ऊचे ॥ २ ॥

**भाषार्थ**--कोई सखी वसंतके समयमें माधवीलताके पुष्पोंके समान कोमल हैं अङ्ग जिसके और दुर्गम वनमें घूमती हुई और वारंवार दूतियोंके द्वारा चाहा है कृष्णका संग जिसने, अत्यंत जो कंदर्पका ज्वर उससे पैदा हुई चिंतासे व्याकुल, बढती हुई है बाधा (पीडा) जिसको ऐसी राधाजीके प्रति यह सरस वचन बोली अर्थात् ये विलासके वचन कहने लगी ॥ २ ॥

**अथ तृतीयःप्रबंधो वसंतरागेण रूपकताले गीयते३॥**
**ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे ॥**
**मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ॥**
**॥ १॥विहरति हरिरिह सरसवसन्ते॥ नृत्यति युवति-**
**जनेन समं सखि विरहिजनस्य दुरन्ते ॥ ध्रुव० ॥**

पद--ललितलवंगलतापरिशीलनकोमलमलयसमीरे ७ मधुकरनिकरकरंबितकोकिलकूजितकुंजकुटीरे ७ विहरति क्रि० हरिः १ इहऽ सरसवसन्ते ७ नृत्यति क्रि० युवतिजनेन ३ समंऽ सखि १ विरहिजनस्य ६ दुरन्ते ७ ॥ १ ॥

योजना--हे सखि इह वृन्दावनविपिने ललितलवंगलतापरिशीलनकोमलमलयसमीरे मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे विर-

हिजनस्य दुरंते सरसवसन्ते हरिः विहरति युवतिजनेन समं नृत्यति । अत्र सप्तपद्यां ललितेत्यादिसभम्यंतानि पदान्ति वृंदावनविपिनवसन्तयोरुभयोर्विशेषणानि ॥ १ ॥

भाषार्थ-हे सखि ( राधे ) विरहीमनुष्यको दुःखसे गमन करनेके शक्य और मनोहर लवंगकी लताके संबंधसे कोमल है मलयागिरिका पवन जिसमें अर्थात् सुगंधितवायुसे शीतल और भ्रमरोंके समूहके संग मिलेहुए कोकिलोंसे कूजित हैं कुंजोंकी कुटि जिसमें, अर्थात् जहां भ्रमर और कोकिल कुंजोंमें शब्द कररहे हैं ऐसे रससहित वसंतमें इस श्रीवृंदावनवनमें श्रीकृष्णचंद्र विहार करते हैं और युवतिजनोंके संग नृत्य करते हैं अर्थात् अपने कामदेवकी अग्निकी शान्तिके लिये आपको भी वहां जाना उचित है ॥ १ ॥

**उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ॥**
**अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे २।**

पद-उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ७ अलिकुलसंकुलकुसुमसमूहनिराकुलबकुलकलापे ७ ॥ २ ॥

योजना-ईदृशे सरसवसन्ते वृंदावनविपिने हरिः विहरति-क्रीडति चेत्यादि पूर्ववत् ॥ २ ॥

भाषार्थ-उन्मद ( हर्ष ) और कामदेव इनको पैदाकरनेवाला है मनोरथ जिनका ऐसी पथिकोंकी वधू जिसमें विलाप कर रही हैं और भ्रमरोंके समूहसे व्याप्त पुष्पोंके समूहसे व्याकुल है बकुलवृक्षोंका समूह जिसमें अर्थात् जिसमें पथिकों

की वधू विरहिणी स्त्री विलाप कर रही हैं और जहां बकुलोंके वृक्षपर भ्रमर बैठे हुए हैं ऐसे वसन्तके समयमें श्रीवृंदावनके विषयमें श्रीकृष्णचंद्र क्रीडा कर रहे हैं और युवतिजनोंके संग नृत्य करते हैं ॥ २ ॥

**मृगमदसौरभरभसवशंवदनवदलमालतमाले ॥ युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥ ३ ॥**

पद-मृगमदसौरभरभसवशंवदनवदलमालतमाले ७ युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ७

योजना-पूर्ववत् ॥ ३ ॥

**भाषार्थ**-कस्तूरीकी सुगन्धिके वेगसे वशीभूत करनेवाली है नवीन२पत्तोंकी पंक्ति जिनकी ऐसे हैं तमाल जिसमें अर्थात् जहां तमालके नवीन पत्तोंमें कस्तूरीकीसी सुगंध आती है और तरुण मनुष्योंके हृदयको विदीर्ण ( छेदन ) करनेवाला जो कामदेव उसके नखोंके समान रुचि है जिनकी ऐसे पलाशके पुष्पोंका है समूह जिसमें अर्थात् जहां कामदेवके नखोंके तुल्य तुल्य खिलाहुआ किंशुक तरुणजनोंके हृदयको विदीर्ण कर रहा है । इससे विदीर्णहृदय कृष्णचंद्र अवश्य आपके समागमको चाहेंगे ॥ ३ ॥

**मदनमहीपतिकनकदंडरुचिकेसरकुसुमविकाशे ॥ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे४॥**

पद-मदनमहीपतिकनकदंडरुचिकेशरकुसुमविकाशे ७ मिलितशिलीमुखपाटलिपटलकृतस्मरतूणविलासे ७ ॥ ४ ॥

योजना-पूर्ववत् ॥ ४ ॥

**भाषार्थ**-कामदेवमहाराजके छत्रके जो सुवर्णदण्ड उसके समान है रुचि जिसकी ऐसे केशरके पुष्पोंका है विकाश ( खिलना ) जिसमें और मिलेहुए हैं भ्रमर जिसमें ऐसे पाटल-पुष्पके समूह जिसमें कामदेवके तूण ( तर्कस ) की चेष्टा कर रहे हैं अर्थात् जहां नागकेशरके पुष्प अधिक हैं और काम-देवके तूणकी समान पाटालिके पुष्प खिल रहे हैं ॥ ऐसे वृंदा-वनमें श्रीकृष्णचंद्र क्रीडाकर रहे हैं ॥ ४ ॥

**विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ॥**
**विरहिनिकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे ५॥**

पद-विगलितलज्जितजगदवलोकनतरुणकरुणकृतहासे ७-विरहि-निकृन्तनकुन्तमुखाकृतिकेतकिदन्तुरिताशे ७ ॥ ५ ॥

योजना-पूर्ववत् ॥ ५ ॥

**भाषार्थ**-शिथिल हैं अंग जिसके ऐसे लज्जित संसारके देखनेसे नवीन करुणके वृक्ष जिसमें खिले हुए पुष्पोंके व्याजसे हँस रहे हैं और विरहीजनोंके मारक जो भालेके मुखाकर केतकीके पुष्प उनसे व्याप्त हैं दशोंदिशा जिसमें । शेष पूर्ववत् जानो ॥ ५ ॥

**माधविकापरिमलललिते नवमालतिजातिसुगन्धौ ॥**
**मुनिमनसामपि मोहनकारिणि तरुणाकारणबन्धौ ६॥**

पद-माधविकापरिमलललिते ७ नवमालतिजातिसुगन्धौ ७ मुनि-मनसाम् ६ अपि ऽ मोहनकारिणि ७ तरुणाकारणबन्धौ ७

योजना—पूर्ववत् ॥ ६ ॥

**भाषार्थ**--माधवीके लतासे मनोहर और नवीन मालती और जातिके पुष्पोंकी है सुगंधि जिसमें और मुनियोंके भी मनको मोहनेवाला और तरुण मनुष्योंका स्वाभाविक मित्र ऐसे वसन्तमें ऐसे वृंदावनमें श्रीकृष्णचंद्र क्रीडा कर रहे हैं ॥ ६ ॥

**स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते॥**
**वृन्दावनविपिने परिसरपरिगतयमुनाजलपूते ॥७॥**

पद—स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकितचूते ७ वृंदावनविपिने ७, परिसरपरिगतयमुनाजलपूते ७ ॥ ७ ॥

योजना—हे राधे स्फुरदति० कितचूते परिसरपरिगतयमुनाजलपूते वृंदावनविपिने त्वं परिसर ( गच्छ ) ॥ ७ ॥

**भाषार्थ**—हलतीहुई अतिमुक्तलताके स्पर्शसे खिले हैं आनंद से आम्रके वृक्ष जिसमें और जिसके समीपभागमें प्राप्त हुए यमुनाके जलसे पवित्रता है ऐसे श्रीवृंदावनविपिनमें श्रीकृष्णचंद्र क्रीडा करते हैं अर्थात् जो जो कामदेवके उद्दीपक चिह्न वर्णन किये हैं उन सबसे युक्त इस वसंतके समयमें पूर्वोक्त मनोहर श्रीवृंदावनके विषे हे राधे आपका जाना अवश्य श्रीकृष्ण चंद्रजीके समागमका कारण होगा ॥ ७ ॥

**श्रीजयदेवभणितमिदमुदयतु हरिचरणस्मृतिसारम्॥**
**सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम्॥८॥**

इति श्रीगीतगोविन्दे तृतीयः प्रबन्धः ॥ ३ ॥

पद—श्रीजयदेवभणितम् १ इदम् १ उदयतु क्रि०हरिचरण-स्मृतिसारम् १ सरसवसन्तसमयवनवर्णनम् १ अनुगतमदन-विकारम् १ ॥ ८ ॥

योजना—श्रीजयदेवभणितम् इदम् हरिचरणस्मृतिसारम् सरसव-सन्तसमयवनवर्णनम् १ अनुगतमदनविकारम् उदयतु ॥ ८ ॥

**भाषार्थ**—परमेश्वरके चरणोंका स्मरण है मुख्य जिसमें और कामदेवके विलासका है अनुकरण जहां ऐसा यह श्री जयदेव-कविका कहा रससहितवसंतसमयके वनका वर्णन उदयको प्राप्त हो अर्थात् चिरकालतक स्थिर रहो ॥ ८ ॥

इति श्रीभाषाविवृतौ तृतीयः प्रबन्धः ॥ ३ ॥

**दरविगलितमल्लीवल्लिचञ्चत्परागप्रकटितपटवासै-र्वासयन्काननानि ॥ इह हि दहति चेतः केतकी-गन्धबन्धुः प्रसरदसमबाणप्राणवद्गन्धवाहः ॥ १ ॥**

पद—दरविगलितमल्लीवल्लिचंचत्परागप्रकटितपटवासैः ३ वास-यन् १ काननानि२ इहऽ हिऽ दहति क्रि०चेतः २ केतकीगन्धबन्धुः१ प्रसरदसमबाणप्राणवद्गन्धवाहः १ ॥ १ ॥

योजना—इह केतकीगंधबंधुः गंधवाहः प्रसरदसमबाणप्राणवत् दरविगलितमल्लीवल्लिचंचत्परागप्रकटितपटवासैः काननानि वासयन् सन् विरहिणां चेतः दहति ॥ १ ॥

**भाषार्थ**—हे राधे इस वसन्तके समयमें किंचित् खिली हुई चमेलीकी लताओंमें उडती हुई पटवासचूर्णकी समान पुष्पोंका रजोंसे केतकीके गंधसे सुगंधित वायु चलते हुए काम-देवके बाणोंके प्राणके समान विरहीजनोंके चित्तको दग्ध करता

है अर्थात् सुगंधितवायुसे इस वसन्तके समयमें विरहीजनोंका चित्त दग्ध हो रहा है इससे आपका गमन उचित है ॥

**अद्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं प्रालेयप्लवनेच्छयाऽनुसरति श्रीखण्डशैलानिलः ॥ किंच स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षोदयादुन्मीलंति कुहूः कुहूरिति कलोत्तालाः पिकानां गिरः ॥ २॥**

पद–अद्यऽ उत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं २ प्रालेयप्लवनेच्छया ३ अनुसरति क्रि० श्रीखण्डशैलानिलः १ किंचऽ स्निग्धरसालमौलिमुकुलानि २ आलोक्यऽ हर्षोदयात् ५ उन्मीलन्ति क्रि०कुहूः कुहूः १ इतिऽ कलोत्तालाः १ पिकानां ६ गिरः १ ॥ २॥

योजना–हे राधे अद्य श्रीखण्डशैलानिल उत्संगवसद्भुजंगकवलक्लेशात् इव प्रालेयप्लवनेच्छया ईशाचलम् अनुसरति, किंच पिकानां गिरः स्निग्धरसालमौलिमुकुलानि आलोक्य कुहूः कुहूः इति कलोत्तालाः हर्षोदयात् उन्मीलंति ॥ २ ॥

भाषार्थ–हे राधे ! आज वसन्तके समयमें मलयाचलका पवन मानो अपनी गोष्ठीमें वसते हुए सर्पोंके ग्रासके भयसे हिममें डूबनेकी इच्छासे हिमाचलकी तरफ गमन करता है और कोकिलोंकी वाणी कोमल २ आम्रके वृक्षोंको देखकर आनंदसे उदयसे कुहूः कूहूः यह है ऊंचा ताल जिनमें ऐसी निकलती हैं ॥ २ ॥

**उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ॥ नीयन्ते**

**पथिकैः कथंकथमपि ध्यानावधानक्षणप्राप्तप्राणसमा-समागमरसोल्लासैरमी वासराः ॥ ३ ॥**

पद-उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिल-काकलीकलकलैः ३ उद्गीर्णकर्णज्वराः १ नीयन्ते क्रि० पथिकैः ३ कथंऽ कथम् ऽ अपि ऽ ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैः ३ अमी १ वासराः १ ॥ ३ ॥

योजना-उन्मीलन्मधुगंधलुब्धमधुपव्याधूचूतांकुरक्रीडत्कोकिल-काकलीकलकलैः उद्गीणकर्णज्वराः अमी वासराः ध्यानावधानक्षण-प्राप्तप्राणसमासमागमरसोल्लासैः पथिकैः कथंकथमपि नीयन्ते ॥३॥

**भाषार्थ**-ध्यानमें चित्तकी एकाग्रतासे क्षणमात्रमें प्राप्त हुए जो स्मरण की प्राणप्रिया उसके समागमके रसका है उल्लास ( आनंद ) जिसको ऐसे पाथिकजन, जिन दिनोंमें खिले हुए मधु ( महुआ ) के पुष्पके गंधके लोभी भ्रमरोंने कंपाये हुए आम्रके वृक्षके अंकुरोंमें क्रीडा करते हुए कोकिलोंकी सूक्ष्म और अव्यक्त मधुरध्वनियोंके कोलाहल सुननेसे पैदा होता है मनमें उपताप अर्थात् वह कोकिलोंकी ध्वनि जिन वसन्तके दिनोंमें दुःखदायी है ऐसे वसन्तके दिनोंको किसी किसी प्रकार बड़ी कठिनतासे व्यतीत करते हैं ॥ ३ ॥

**अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलास-लालसम् ॥ मुरारिमारादुपदर्शयंत्यसौ सखी-समक्षं पुनराह राधिकाम् ॥ ४ ॥**

पद-अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसं २ मुरारिम्

२ आरात्ऽउपदर्शयन्ती १ असौ १ सखी १ समक्षंऽपुनः आह क्रि० राधिकाम् २ ॥ ४ ॥

योजना—अनेकनारीपरिरंभसंभ्रमस्फुरन्मनोहारिविलासलालसं मुरारिम् आरात् समक्षम् उपदर्शयन्ती असौ सखी पुनः राधिकाम् आह ॥ ४ ॥

**भाषार्थ**--अनेकस्त्रियोंके आलिंगन ( स्पर्श ) के आदरसे प्रकट है मनोहर विलासमें लालसा जिसकी ऐसे मुरारिको दूर पर प्रत्यक्ष दिखातीहुई यही सखी फिर राधिकाजीके प्रति बोली ॥ ४ ॥

**अथ चतुर्थप्रबंधो रामकलीरागेण रूपकताले गीयते।४।**

**चंदनचर्चितनीलकलेवरपीतवसनवनमाली ॥**
**केलिचलन्मणिकुंडलमंडितगंडयुगस्मितशाली॥ १॥**
**हरिरिह मुग्धवधूनिकरे विलासिनि विलसति**
**केलिपरे ॥ ध्रु० ॥**

पद--चंदनचर्चितनीलकलेवरपीतवसनवनमाली १ केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली १ हरिः १ इहऽ मुग्धवधूनिकरे ७ विलासिनि ७ विलसति क्रि० केलिपरे ७ ॥ १॥

योजना--हे विलासिनि—चंदनचर्चितनीलकलेवरपीतवसनवनमाली केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली हरिः केलिपरे मुग्धवधूनिकरे विलसति ॥ १ ॥

**भाषार्थ**—हे विलासिनि राधे ! चंदनको नीलशरीरपर लगाकर पीतवस्त्र और वनमालाको धारणकर और क्रीडासे चलायमान मणिजटितकुण्डलोंसे शोभित हैं दोनों गण्डस्थल जिसके

और किंचित् हँसीसे शोभित है मुखारविंद जिसका ऐसे श्रीहरि क्रीडामें तत्पर मनोहरकामिनीयोंके समूहमें इस वृंदावनमें विलास करते हैं ॥ १ ॥

पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ॥
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ॥ २ ॥

पद—पीनपयोधरभारभरेण ३ हरिं २ परिरभ्यऽ सरागं १ गोपवधूः१ अनुगायति क्रि०का १ चित्ऽ उदंचितपंचमरागम् ॥ २ ॥

योजना—काचित् गोपवधूः पीनपयोधरभारभरेण सरागं हरिं परिरभ्य उदंचितपंचमरागम् अनुगायति ॥ २ ॥

भाषार्थ—हे राधे कोई गोपी अपने पुष्ट ( भारी ) स्तनोंके भारके भर ( गौरव ) से सुन्दर प्रीतिपूर्वक श्रीकृष्णचंद्रजीका आलिंगन ( स्पर्श ) करके फिर पंचमराग है प्रगट जिसमें ऐसा गान करती है ॥ २ ॥

कापि विलासविलोलविलोचनखेलनजनितमनोजम्।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदनसरोजम् ॥ ३ ॥

पद—का १ अपिऽ विलासविलोलविलोचनखेलनजनितमनोजम् २ ध्यायति क्रि०मुग्धवधूः १ अधिक २ मधुसूदनवदनसरोजम् २ ॥ ३॥

योजना—का अपि मुग्धवधूः विलासविलोलविलोचनखेलनजनितमनोजम् मधुसूदनवदनसरोजम् अधिकं ध्यायति ॥ ३ ॥

भाषार्थ—कोई मनोहर गोपी विलाससे चंचलनेत्रोंके संचारसे पैदाकिया है कामदेव जिसने ऐसे श्रीकृष्णचंद्रजीके मुखारविंदका ध्यान करती हैं अर्थात् श्रीकृष्णचंद्रजीके मुखकी चिंतासेही अपनी कामाग्निको शांत कर रही है ॥ ३ ॥

**कापि कपोलतले मिलिता लपितुं किमपि श्रुति-
मूले॥ चारु चुचुंब नितम्बवती दयितं पुलकैरनुकूले॥**

पद–का १ अपिऽकपोलतले ७ मिलिता १ लपितुंऽ किम् ऽ अपिऽ श्रुतिमूले ७ चारु २ चचुंब क्रि० नितम्बवती १ दयितं २ पुलकैः ३ अनुकूले ७ ॥ ४ ॥

योजना–श्रुतिमूले किम् अपि लपितुम् मिलिता का अपि नितम्बवती पुलकैः अनुकूले कपोलतले दयितं (श्रीकृष्णचंद्रं) चारु यथा स्यात्तथा चुचुंब ॥ ४ ॥

**भाषार्थ**–कोई गोपी कानोंके मूल देशमें कुछ कहनेके लिये मुखको लगाकर रोमांच खडी है जिसमें ऐसे श्रीकृष्णचंद्रजीके कपोलोंका भली प्रकार चुंबन करती भई अर्थात् कहनेके छलसे मुखचुंबन कररही है ॥ ४ ॥

**केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले॥
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥ ५ ॥**

पद–केलिकलाकुतुकेन ३ चऽ का १ चित्ऽ अमुं२यमुनाजलकूले७ मंजुलवंजुलकुंजगतम् २ विचकर्ष क्रि० करेण ३ दुकूले ७ ॥ ५ ॥

योजना–काचित् गोपी यमुनाजलकूले केलिकलाकुतुकेन मंजुलवंजुलकुंजगतम् अमुं श्रीकृष्णचंद्रं करेण दुकुले विचकर्ष ॥ ५ ॥

**भाषार्थ**–कोई गोपी शृंगाररसकी क्रीडाकी वांछासे यमुनाजलके तटपर जो मनोहर वेतोंका कुंज उसमें टिके हुये इन श्रीकृष्णचंद्रजीको हाथसे दुकूल ( दुपट्टा ) पकडकर खींचती भई अर्थात् श्रीकृष्णचंद्रजीको सङ्ग शृंगाररसकी क्रीडाके आनंदके भोग रही है ॥ ५ ॥

**करतलतालतरलवलयावलिकलितकलस्वनवंशे ॥ रासरसे सह नृत्यपरा हरिणा युवतिः प्रशशंसे॥ ६॥**

पद-करतलतालतरलवलयावलिकालितकलस्वनवंशे ६ रासरसे ७ सहऽ नृत्यपरा १ हरिणा ३ युवतिः १ प्रशशंसे क्रि० ॥ ६ ॥

योजना-करतलतालतरलवलयावलिकालितकलस्वनवंशे रासरसे सह नृत्यपरा काचित् युवतिः हरिणा प्रशशंसे ॥ ६ ॥

**भाषार्थ**-करतालीके तालसे चंचल जो कंकणोंकी पंक्ति उसके संग मिला है मधुर और प्रकट शब्द जिनका ऐसे हैं वंश जिसमें ऐसी रासक्रीडाके अनुरागमें संग नृत्य करती हुई किसी युवति ( जवानगोपी ) की श्रीकृष्णचंद्रजीने प्रसंसा की अर्थात् धन्यवाद दिया ॥ ६ ॥

**श्लिष्यति कामपि चुंबति कामपि रमयति कामपि रामाम्॥पश्यति सस्मितचारु परामपरामनुगच्छति वामाम् ॥ ७ ॥**

पद-श्लिष्यति क्रि०काम्२अपिऽ चुंबति क्रि०काम्२अपिऽ रमयति क्रि० काम् २ अपि रामाम् २ पश्यति क्रि०सस्मितचारु २ पराम् २ अनुगच्छति क्रि०वामाम् २ ॥ ७ ॥

योजना-श्रीकृष्णः काम् अपि रामां श्लिष्यति काम् अपि चुम्बति काम् अपि रमयति परां सस्मितचारु यथा स्यात्तथा पश्यति अपरां वामाम् अनुगच्छति ॥ ७ ॥

**भाषार्थ**-हे राधे ! श्रीकृष्णचंद्रजी किसी गोपीका आलिंगन ( स्पर्श ) करते हैं किसीके मुखका चुंबन करते हैं और

किसी गोपीके संग रमण ( क्रीडा ) करते हैं और किसीको हँसकर मनोहर दृष्टिसे देखते हैं और किसी सुंदर गोपीके संग अनुगमन करते हैं अर्थात् पीछे २ चलते हैं ॥ ७ ॥

**श्रीजयदेवकवेरिदमद्भुतकेशवकेलिरहस्यम् ॥ वृन्दावनविपिने ललितं वितनोतु शुभानि यशस्यम् ॥८॥**

**इति श्रीगीतगोविन्दे चतुर्थः प्रबंधः ॥ ४ ॥**

पद–श्रीजयदेवकवेः ६ इदम् ९ अद्भुतकेशवकेलिरहस्यम् १ वृंदावनविपिने ७ ललितम् १ वितनोतु क्रि० शुभानि२ यशस्यम् ॥१८॥

योजना–श्रीजयदेवकवेः–अद्भुतकेशवकेलिरहस्यम् यशस्यम् वृन्दावनविपिने ललितम् इदम् गीतय भक्तानां शुभानि वितनोतु ॥ ८ ॥

भाषार्थ–जो अद्भुत है और जिसमें केशवकी क्रीडाका रहस्य ( आनंद ) है और श्रीवृन्दावनके विषे जो मनोहर है अर्थात् अनेक रसोंसे युक्त होनेसे एकवार सब गोपियोंको आनंदका दाता है और जो यशका कर्ता है ऐसा यह श्रीजयदेवकविका गीत भक्तोंको कल्याणका दाता हो ॥ ८ ॥

इति श्रीगीतगोविंदभाषाविवृतौ चतुर्थःप्रबन्धः ॥४ ॥

**विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवरश्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ॥ स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धो हरिः क्रीडति ॥ १ ॥**

पद–विश्वेषाम् ६ अनुरंजनेन ३ जनयन् १ आनंदम् २ इंदीवरश्रेणीश्यामलकोमलैः ३ उपनयन् १ अंगैः ३ अनंगोत्सवम् १ स्वच्छंदं

२ व्रजसुंदरीभिः ३ अभितः ऽ प्रत्यंगम् २ आलिंगितः १ शृंगारः १ सखि १ मूर्तिमान् १ इव ऽ मधौ ७ मुग्धः १ हरिः १ क्रीडति क्रि०॥

योजना—हे सखि ( राधे ) व्रजसुंदरीभिः अभितः प्रत्यंगं स्वच्छंदं यथा स्यात्तथा आलिंगितः मुग्धः हरिः मूर्तिमान् शृंगारः इव अनुरंजनेन विश्वेषाम् आनंदं जनयन् इंदीवरश्रेणीश्यामलकोमलैः अंगैः अनंगोत्सवम् उपनयन् सन् मधौ क्रीडति ॥ १ ॥

भाषार्थ—हे सखि ! ( राधे ) अनुरागसे संपूर्ण भक्तोंको आनंद करते हुए और नीलकमलकी पंक्तिके समान श्याम और कोमल अपने अंगोंसे कामदेवके उत्साहको उत्पन्न करते हुये और चारों ओरसे व्रजसुंदरियोंने अपनी २ इच्छाके अनुसार आलिंगन किये हैं संपूर्ण अंग जिसके ऐसे मनोहर श्रीकृष्णचंद्रजी मूर्तिको इस धारण किये शृंगार रसके समान वसंतके समयमें क्रीडा करते हैं तात्पर्य यह है। कि उस शृङ्गार रसकी क्रीडाका आनंद आपके भी देखने योग्य है ॥ १ ॥

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवामभ्यर्णं-
परिरभ्य निर्भरमुरः प्रेमान्धया राधया ॥ साधु त्वद्व-
दनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भट-
चुम्बितः स्मितमनोहारी हरिः पातु वः ॥ २ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महाकाव्ये सामोददामोदरो नाम सटीकः प्रथमः सर्गः ॥ १ ॥

पद—रासोल्लासभरेण ३ विभ्रमभृताम् ६ आभीरवामभ्रुवाम् ६ अभ्यर्णम् २ परिरभ्य ऽ निर्भरम् २ उरः २ प्रेमान्धया ३ राधया ३

साधु १ त्वद्वदनम् १ सुधामयम् १ इति५ व्याहृत्य५ गीतस्तुतिव्या-
जात्९उद्भटचुंबितः १ स्मितमनोहारी १हरिः १ पातु क्रि०वः२॥२॥

योजना-रासोल्लासभरेण विभ्रमभृताम् आभीरवामभ्रुवाम् अभ्यर्णं निर्भरं यथा स्यात्तथा उरः परिरभ्य त्वद्वदनं साधु सुधामयम् इति व्याहृत्य गीतस्तुतिव्याजात् प्रेमान्धया राधया उद्भटचुंबितः स्मितमनोहारी हरिः वः ( युष्मान् ) पातु ॥ २ ॥

**भाषार्थ**-रासक्रीडाके आनंदकी अधिकतासे शृंगारविलास करतीहुई गोपीयोंके समक्ष ( सामने ) श्रीकृष्णचंद्रजीके वक्षःस्थलका निर्भरता ( जोर ) से आलिंगन करके प्रेमसे अंधी हुई अर्थात् श्रीकृष्णसे अन्यको नहीं देखती हुई राधाजीने तेरा मुख अमृतरूप बहुत अच्छा है यह कहकर गीतकी स्तुतिके व्याज ( मिस ) से प्रकट किया है चुंबन जिसका और राधाके मुख चुंबनकी चतुरताको देखकर हँसीसे सबके मन हरनेको है शील जिनका ऐसे श्रीकृष्णचंद्र हे भक्त जनो ! तुम्हारी रक्षा करो ॥ २ ॥

इति पं० मिहिरचंद्रकृतगीतगोविंदविवृतौ सामोद-
दामोदरो नाम प्रथमः सर्गः ॥ १ ॥

## द्वितीयसर्गः ॥ २ ॥

विहरति वने राधा साधारणप्रणये हरौ विगलित-
निजोत्कर्षादीर्ष्यावशेन गतान्यतः॥ क्वचिदपि लता-
कुञ्जे गुञ्जन्मधुव्रतमण्डलीमुखराशिखरे लीना दीना-
प्युवाच रहः सखीम् ॥ १ ॥

पद-विरहति ७ वने ऽ राधा १ साधारणप्रणये ७ हरौ ७ विगलित-निजोत्कर्षात् ५ ईर्ष्यावशेन ३ गता १ अन्यतः ऽ क्वचित् ऽ अपि ऽ लताकुञ्जे ७ गुंजन्मधुव्रतमंडलीमुखरशिखरे ७ लीना १ दीना १ अपि ऽ उवाच क्रि० रहः ऽ सखीम् २ ॥ १ ॥

योजना--साधारणप्रणये हरौ वने विहरति सति विगलितनिजोत्कर्षात् ईर्ष्यावशेन अन्यतः गता गुंजन्मधुव्रतमंडलीमुखरशिखरे क्वचित् अपि लताकुंजे लीना दीना अपि राधा सखीं रहः उवाच॥१॥

**भाषार्थ**-जिस समय सब गोपियोंके संग साधारणप्रेमसे श्रीकृष्णचंद्र वनमें विहार कर रहे थे उस समय अपने नष्टभाग्य और ईर्ष्याके वशसे अर्थात् अपनेमें श्रीकृष्णकी अधिक प्रीति न देखकर अन्यस्थलमें गई और गुंजती हुई भ्रमरोंकी मंडली जहां वृक्षोंके अग्रभागपर शब्द कर रही है ऐसी लताओंके कुंजमें छिपी हुई और दीन ( दुःखी ) श्रीराधाजी अपने सखीको एकांतमें यह वचन बोली अर्थात् पश्चात्तापके वचन कहने लगीं ॥ १ ॥

**अथ पञ्चमप्रबन्धो गुर्जरीरागेण रूपकताले गीयते॥५॥**

**संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् ॥**
**चलितदृगञ्चलचञ्चलमौलिकपोलविलोलवतंसम् ॥ १ ॥**
**रासे हरिमिह विहितविलासम् ॥स्मरति मनो मम कृत-परिहासम् ॥ ध्रु० ॥**

पद-संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् २ चलितदृगंचलचंचलमौलिकपोलविलोलवतंसम् २ रासे ७ हरिम् २ इह ऽ विहितविलासम् २ स्मरति क्रि० मनः १ मम ६ कृतपरिहासम् २ ॥ १ ॥

योजना-हे सखि ! इह रासे विहितविलासं कृतपरिहासं संचरदधरसुधामधुरध्वनिमुखरितमोहनवंशं चलितदृगंचलचंचलमौलिकपोलविलोलवतंसं हरिं मम मनः स्मरति ॥ १ ॥

भाषार्थ--हे सखि निकसती है अधरकी सुधा जिसमें ऐसी मधुरध्वनिसे बजायी है मोहन वंशी जिन्होंने और फेंके हैं कटाक्ष जिन्होंने और चंचल है मस्तक जिनका और कपोलोंपर चंचल हैं कुण्डल जिनके और इस वृंदावनमें किया है रासमें विलास जिन्होंने और मेरे संग की है हँसी जिन्होंने ऐसे श्रीकृष्णचंद्रजीको मेरा मन स्मरण करताहै ॥ १ ॥

चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशम् ॥
प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेषम् ॥ २ ॥

पद-चन्द्रकचारुमयूरशिखण्डकमण्डलवलयितकेशम् २ प्रचुरपुरन्दरधनुरनुरञ्जितमेदुरमुदिरसुवेषम् २ ॥ २ ॥

योजना-एवंभूतं कृष्णं मम मनः स्मरति इति पूर्वोक्तध्रुवपदेनान्वयः ॥ २ ॥

भाषार्थ-विचित्र वर्णोंके चिह्नोंसे सुंदर मयूरपिच्छोंके समूहसे कंकणके आकार लपेटे हैं केश जिह्नोंने और इसीसे प्रचुर ( विस्तृत ) इंद्रके धनुषका है चित्र जिनका ऐसे सघन मेघके समान है सुंदर वेष जिनका ऐसे श्रीकृष्णचंद्रको मेरा मन स्मरण करता है ॥ २ ॥

गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम् ।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ ३ ॥

पद—गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभम् २ बन्धुजीवमधुराधरपल्लवम् २ उल्लसितस्मितशोभम् ॥ २ ॥ ३ ॥

योजना—ध्रुवपदेन सह पूर्ववत् ॥ ३ ॥

**भाषार्थ**—हे सखि ! संपूर्ण गोपस्त्रियोंके मुखचुम्बनसे पैदा हुआ है लोभ जिनको और बन्धुजीव पुष्पके समान मधुर है अधरपल्लव जिनका और प्रकाश कीहुई हँसीसे है शोभा जिनकी ऐसे श्रीकृष्णचन्द्रको मेरा मन स्मरण करता है ॥ ३ ॥

**विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम् ॥**
**करचरणोरसि मणिगणभूषणकिरणविभिन्नतमिस्रम् ४।**

पद—विपुलपुलकभुजपल्लववलयितबल्लवयुवतिसहस्रम् २। करचरणोरसि ७ मणिगणभूषणकिरणविभिन्नतमिस्रम् २ ॥ ४ ॥

योजना—ध्रुवपदेन पूर्ववत् ॥ ४ ॥

**भाषार्थ**—अधिक हैं रोम जिनमें ऐसी भुजलताओंसे वेष्टित की ( लपेटी ) हैं अहीरोंकी सहस्रों युवति जिन्होंने और कर चरण वक्षःस्थल इनके भूषणोंमें जटित मणियोंके समूहकी किरणोंसे नष्ट किया है अन्धकार जिन्होंने ऐसे श्रीकृष्णचन्द्रजीका मेरा मन स्मरण करता है ॥ ४ ॥

**जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम् ॥**
**पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥ ५ ॥**

पद—जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकललाटम् २ पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् २ ॥ ५ ॥

योजना—ध्रुवपदेन पूर्ववत् ॥ ५ ॥

**भाषार्थ**—हे सखि ! जिनके ललाटपर चंदनका तिलक

मेघोंके समूहमें चलायमान चंद्रमाकी निंदा करता है और जिनके कपाटके समान भारी हृदयमें पीन ( पुष्ट ) स्तनोंके प्रान्त भागके मलनेसे दया नहीं है अर्थात् निर्दय होकर गोपियोंके स्तनोंको मलते हैं ऐसे श्रीकृष्णचन्द्रजीका मेरा मन स्मरण करता है ॥ ५ ॥

**मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारम् ॥**
**पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥६॥**

पद–मणिमयमकरमनोहरकुण्डलमण्डितगण्डम् २ उदारम् २ पीतवसनम् २ अनुगतमुनिमनुजसुरासुरवरपरिवारम् २ ॥ ६ ॥

योजना–ध्रुवपदेन पूर्ववत् ॥ ६ ॥

भाषार्थ–हे सखि मणिसे जटित मनोहर मकराकृति कुण्डलोंसे जिनके कपोल मण्डित हैं और जो सबके वांछितको पूर्ण करते हैं और पीतांबरको धारण रहे हैं और अपने अनुयायी मुनि मनुष्य देवता असुर इनमें जो श्रेष्ठ वही जिनका परिवार है ऐसे श्रीकृष्णचंद्रजीको मेरा मन स्मरण करता है ॥ ६ ॥

**विशदकदम्बतले मिलितं कलिकलुषभयं शमयन्तम् ॥**
**मामपि किमपि तरङ्गदनङ्गदृशा मनसा रमयन्तम् ॥ ७॥**

पद–विशदकदम्बतले ७ मिलितं २ कलिकलुषभयं २ शमयन्तम् २ माम् २ अपि ऽ किम् २ अपि ऽ तरङ्गदनङ्गदृशा ३ मनसा ३ रमयन्तम् २ ॥ ७ ॥

भाषार्थ–सुंदरकदम्बके तलमें मिले और कलिकालमें उत्पन्न हुए पाप भयके नाशक और प्रतीत होता है कामदेवका

योग जिसमें ऐसी दृष्टि और हृदयसे मेरे संगकी किंचित् रमण करनेहारे श्रीकृष्णचंद्रजीको हे सखि ! मेरा मन स्मरण करता है ॥ ७ ॥

**श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ॥**
**हरिचरणस्मरणं प्रति संप्रति पुण्यवतामनुरूपम् ॥८॥**

**इति श्रीगीतगोविन्दे पञ्चमः प्रबन्धः ॥ ५ ॥**

पद—श्रीजयदेवभणितम् १ अतिसुन्दरमोहनमधुरिपुरूपम् १ हरिचरणस्मरणम् २ प्रतिऽ पुण्यवताम् ६ अनुरूपम् १ ॥ ८ ॥

योजना—अतिसुन्दरमोहनमधुरिपुरूपं श्रीजयदेवभणितम् इदम्—गीतं संप्रति हरिचरणस्मरणम् प्रति पुण्यवताम् अनुरूपम् भवतु ८

**भाषार्थ**—अत्यन्तसुन्दर और मोहन है श्रीकृष्णचंद्रजीके रूपका वर्णन जिसमें ऐसा श्रीजयदेवका कहा यह गीत इस कलिकालमें भक्तोंको हरिचरणोंके स्मरणके लिये योग्य हो अर्थात् पुण्यात्माओंको परमेश्वरके चरणारविंदके स्मरणको उत्पन्न करो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ पञ्चमः प्रबन्धः ॥ ५ ॥

**गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते वहति च परीतोषं दोषं विमुञ्चति दूरतः ॥ युवतिषु चलतृष्णे कृष्णे विहारिणि मां विना पुनरपि मनो वामं कामं करोति करोमि किम् ॥ १ ॥**

पद—गणयति क्रि० गुणग्रामम् २ भ्रामम् २ भ्रमात् ५ अपिऽ नऽ ईहते क्रि० वहति क्रि० चऽ परीतोषम् २ विमुञ्चति क्रि० दूरतःऽ युव-

तिषु ७ चलत्तृष्णे ७ कृष्णे ७ विहारिणि७मां २ विनाऽ पुनःऽअपिऽ मनः १ वामम् १ कामम् २ करोति क्रि०करोमि क्रि०किम्ऽ॥१॥

योजना--हे सखि युवतिषु चलत्तृष्णे मां विना विहारिणि कृष्णे पुनः अपि वामं मम मनः कामं करोति कृष्णस्य गुणग्रामं गणयति भ्रमात् अपि भ्रामं न ईहते च पुनः परीतोषम् एति दोषं दूरतः विमुञ्चति--अतः किं करोमि ॥ १ ॥

**भाषार्थ**--हे सखि! मेरा अवश मन श्रीकृष्णचन्द्रजीके गुण समूहोंको गिनता हैं और भ्रमसे भी विस्मरणको वा क्रोधको नहीं चाहता और श्रीकृष्णके गुणोंको अत्यन्त सुनकर संतोषको प्राप्त होता है और मेरा जो तिरस्काररूपी दोष उसको छोडता है और व्रजकी अन्य युवतियोंमें लगीं है तृष्णा जिनकी ओर मेरे विना विहार करते हुए श्रीकृष्णचन्द्रजीकी फिरभी मेरा मन इच्छा करता है मैं क्या करूं ॥ १ ॥

**अथ षष्ठप्रबन्धो मालवरागेण एकतालीताले गीयते ॥६॥**

**निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तम् । चकितविलोकितसकलदिशा रतिरभसभरेण हसन्तम् ॥ १ ॥ सखि हे केशिमथनमुदारम् ॥ ध्रु० ॥**

पद--निभृतनिकुञ्जगृहम् २ गतया ३ निशि ७ रहसि ७ निलीयऽ वसन्तम् २ चकितविलोकितसकलदिशा ३ रतिरभसभरेण ३ हसन्तम् २ सखि १ हेऽकेशिमथनम् २ उदारम् २ रमय क्रि०मया ३ सहऽ मदनमनोरथभावितया सविकारम् २ ॥ १ ॥

योजना--हे सखि निभृतनिकुञ्जगृहं गतया चकितविलोकितसकलदिशा मदनमनोरथभावितया मया सह निशि रहसि निलीय

वसन्तं रतिरभसभरेण हसन्तम् उदारं सविकारम् केशिमथनं त्वं रमय ॥ १ ॥

भाषार्थ-हे सखि ! गुप्तकुञ्जोंकें गृहमें प्राप्त हुई और चकित होकर देखी हैं सकल दिशा जिसने और कामदेवके मनोरथका है अभिप्राय जिसका ऐसी मेरे संग रात्रिको एकान्तमें छिपकर वसते और रतिके उत्साहकी अधिकतासे हँसते उदार और सविकार ( प्रीतिसहित ) केशिमथन( श्रीकृष्णजी) के संग मेरा रमण करादे ॥ १ ॥

प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ॥ मृदु-
मधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम्॥२॥

पद-प्रथमसमागमलज्जितया ३ पटुचाटुशतैः ३ अनुकूलम् २ मृदुमधुरस्मितभाषितया ३ शिथिलीकृतजघनदुकूलम् २ ॥ २ ॥

योजना-हे सखि पटुचाटुशतैः अनुकूलं शिथिलीकृतजघनदुकूलं केशिमथनं प्रथमसमागमलज्जितया मृदु मधुरस्मितभाषितया मया सह त्वं रमय इति पूर्वोक्तवत्पदेन अन्वयः ॥ २ ॥

भाषार्थ-हे सखि ! पाहिले समागमसे लज्जासे युक्त और कोमल मधुर हंसी सहित है भाषण जिसका ऐसी मेरे संग कुशल जो सैंकडों स्तुतिके वचन उनसे अपने अनुकूल करनेहारे और शिथिल किया है जङ्घाओंका दुकूल ( दुपट्टा ) जिन्होंनें ऐसे श्रीकृष्णचन्द्रजीके संग मेरी क्रीडा करादें ॥ २ ॥

किसलयशयननिवेशितया चिरमुरसि ममैव शयानम्॥
कृतपरिरम्भणचुम्बनया परिरभ्य कृताधरपानम् ॥ २॥

पद-किसलयशयननिवेशितया २ चिरम्ऽ उरसि ७ मम ६ एवऽ शयानम् २ कृतपरिरम्भणचुम्बनया २ परिरभ्यऽ कृताधरपानन् २ ॥ ३ ॥

योजना-हे सखिकिसलयशयननिवेशितया कृतपरिरम्भणचुम्बनया मया सह ( मम एव ) उरसि चिरं शयानं परिरभ्य कृताधरपानं केशिमथनं त्वं रमय ॥ ३ ॥

**भाषार्थ**-हे सखि ! कोमलपत्तोंकी शय्यापर सोई और किया है आलिङ्गन ( स्पर्श) करके श्रीकृष्णचन्द्रजीके मुखका चुम्बन जिसने ऐसी मेरे संग मेरीही छातीपर चिरकालतक शयन करते हुए और मेरा आलिङ्गन करके किया है अधरका पान जिसने ऐसे श्रीकृष्णचन्द्रजीके संग मेरा रमण करा दे ॥ ३ ॥

**अलसनिमीलितलोचनया पुलकावलिललितकपोलम् ।**
**श्रमजलसिक्तकलेवरया वरमदनमदादतिलोलम् ॥ ४ ॥**

पद-अलसनिमीलितलोचनया ३ पुलकावलिललितकपोलम् २ श्रमजलसिक्तकलेवरया ३ वरमदनमदात् ५ अतिलोलम् २ ॥ ४ ॥

योजना-हे सखि अलसनिमीलितलोचनया श्रमजलसिक्तकलेवरया मया सह-पुलकावलिललितकपोलं वरमदनमदात् अतिलोलं केशिमथनं त्वं रमय ॥ ४ ॥

**भाषार्थ**-हे सखि ! रतिक्रीडाके सुखसे पैदा हुए आलस्यसे नीचे हैं नेत्र जिसके और रतिके श्रमसे पैदा हुए जलसे सींचा है शरीर जिसका ऐसी मेरे संग रोमांच पंक्तिसे मनोहर हैं कपोल जिनके और जो कामदेवसे पैदा हुए अत्यन्त हर्षसे अतीव चंचल है ऐसे श्रीकृष्णचन्द्रजीकी क्रीडा करा दे ॥ ४ ॥

**कोकिलकलरवजितया जितमनसिजतन्त्रविचारम् ॥**
**श्लथकुसुमाकुलकुन्तलया नखलिखितघनस्तनभारम्५**

पद्—कोकिलकलरवकूजितया ३ जितमनसिजतन्त्रविचारम् २ श्लथकुसुमाकुलकुन्तलया ३ नखलिखितघनस्तनभारम् २ ॥ ५ ॥

योजना—हे सखि कोकिलकलरवकूजितया श्लथकुसुमाकुलकुन्तलया मया सह जितमनसिजतन्त्रविचारं नखलिखितघनस्तनभारं केशिमथनं त्वं रमय ॥ ५ ॥

**भाषार्थ**—हे सखि . कोकिलकी ध्वनिके समान है शब्द जिसका और शिथिल ( ढीले ) और पुष्पोंसे व्याप्त ( भरे ) हैं केश जिसके ऐसी मेरी संग जीत लिया है कामदेवका शास्त्र विचार जिन्होंने और स्तनोंके समूहपर किया है नखोंका चिन्ह जिन्होंने ऐसे श्रीकृष्ण चन्द्रजीकी क्रीडा करा दे॥ ५ ॥

**चरणरणितमणिनूपुरया परिपूरितसुरतवितानम् ॥**
**मुखरविशृङ्खलमेखलया सकचग्रहचुम्बनदानम् ॥६॥**

पद्—चरणरणितमणिनूपुरया ३ परिपूरितसुरतवितानम् ॥ मुखरविशृङ्खलमेखलया ३ सकचग्रहचुम्बनदानम् २ ॥ ६ ॥

योजना—हे सखि चरणरणितमणिनूपुरया मुखरविशृङ्खलमेखलया मया सह परिपूरितवितानं सकचग्रहचुम्बनदानं श्रीकृष्णं त्वं रमय ॥ ६ ॥

**भाषार्थ**—हे सखि चरणोंमें शब्द कररहे हैं मणिजटित नूपुर जिसके और शब्द कररहे हैं ढीली मेखला ( कोंदनी ) जिसकी ऐसी मेरे संग पूर्ण किया है रतिक्रीडाका समुह

जिन्होंने और केशोंको पकडकर किया हैं सुखचुंबन जिन्होंने ऐसे श्रीकृष्णचंद्रजीकी क्रीडा करादे ॥ ६ ॥

**रतिसुखसमयरसालया दरमुकुलितनयनसरोजम् ॥**
**निःसहनिपतिततनुलतया मधुसूदनमुदितमनोजम् ७**

पद—रतिसुखसमयरसालया ३ दरमुकुलितनयनसरोजम् २ निःसहनिपतिततनुलतया ३ मधुसूदनम् २ उदितमनोजम् २ ॥ ७

योजना—हे सखि रतिसुखसमयरसालसया निस्सहनिपतिततनुलतया मया सह दरमुकुलितनयनसरोजं मधुसूदनम् श्रीकृष्णम् उदितमनोजम् त्वं रमय ॥ ७ ॥

भाषार्थ—हे सखि ! रतिके सुखकालमें आया है आलस्य जिसको और असामर्थ्यसे पतित होयगी है शरीरलता जिसकी ऐसी मेरे संग किंचित् मीचे हैं नेत्रकमल जिन्होंने और मधुदैत्यके जो नाशक हैं और उत्पन्न हुआ है कामदेव जिनको ऐसे श्रीकृष्णचन्द्रजीके संग मेरी क्रीडा करा दे ॥

**श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम् ।**
**सुखमुत्कण्ठितराधिकयाकथितं वितनोतु सलीलम्॥८॥**

**इति श्रीगीतगोविन्दे षष्ठः प्रबन्धः ॥ ६ ॥**

पद—श्रीजयदेवभणितम् १ इदम् १ अतिशयमधुरिपुनिधुवनशीलम् १ सुखम् २ उत्कण्ठितराधिकया ३ कथितम् १ वितनोतु क्रि०सलीलम् २ ॥ ८ ॥

योजना—श्रीजयदेवभणितम् अतिशयमधुरिपुनिधुवनशीलम् उत्कण्ठितराधिकया कथितम् सलीलम् इदम् गीतम् भक्तानां सुखं वितनोतु ॥ ८ ॥

**भाषार्थ**--श्रीजयदेवकविने वर्णन किया और अत्यन्त है श्रीकृष्णचंद्रजीकी क्रीडाका चारित्र जिसमें--और उत्कंठा ( प्रीति ) से राधाजीने कहा हैं और जिसमें शृङ्गाररसकी लीला है ऐसा यह गीत पढने और सुननेवाले भक्त जनोंको इस लोक और परलोकके सुख दो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ षष्ठः प्रबन्धः ॥ ६ ॥

**हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवीवृन्दोत्सा- रिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थलम् ॥ मामुद्वीक्ष्य विलज्जितस्मितसुधामुग्धाननं कानने गोविन्दं व्रज- सुन्दरीगणवृतं पश्यामि हृष्यामि च ॥ १ ॥**

पद--हस्तस्रस्तविलासवंशम् २ अनृजुभ्रूवल्लिमद्बल्लवीवृन्दोत्सारि- दृगन्तवीक्षितम् २ अतिस्वेदार्द्रगण्डस्थलम् २ माम् उद्वीक्ष्यऽ विल- ज्जितस्मितसुधामुग्धाननम् २ कानने ७ गोविन्दम् २ व्रजसुन्दरी- गणवृतम् २ पश्यामि क्रि०--हृष्यामि क्रि०चऽ ॥ १ ॥

योजना--हे सखि हस्तविलासवंशम् अनृजुभ्रूवल्लिमद्बल्लवीवृन्दो- त्सारिदृगन्तवीक्षितम् अतिस्वेदार्द्रगण्डस्थलम् माम् उद्वीक्ष्य विलज्जित- स्मितसुधामुग्धाननम् कानने व्रजसुन्दरीगणवृतं गोविन्दम् अहं पश्यामि च पुनः हृष्यामि ॥ १ ॥

**भाषार्थ**--जब सखी अत्यंतप्रीतिसे श्रीकृष्ण चंद्रजीके समीप लेजाने लगी तब गोपियोंका समूहसे युक्त श्रीकृष्णचन्द्रको देखकर लौटकर फिर सखीके प्रति बोली कि हे सखि हाथ- मेंसे गिरी हैं क्रीडाकी वंशी जिनके और कुटिल हैं भ्रुकुटी जिनकी ऐसी गोपियोंके समूहमें कटाक्षों, ऊपर, नीचे तिरछे

फेंककर जो देख रहे हैं और अत्यंत स्वेदसे आर्द्र ( गीला ) है गंडस्थल जिनका और मुझे देखकर अमृतरूप हंसीसे युक्त है मनोहर मुख जिनका और जो व्रजसुंदरियोंके समूहसे युक्त हैं ऐसे श्रीगोविंदको मैं देखती हूं और आनन्दित होती हूं अर्थात् देखूंगी और आनंदित हूंगी यहां वर्तमानकालका समीप जो भविष्यत्काल उसमें वर्तमानकालमें प्रत्यय है ॥ १ ॥

दुरालोकस्तोकस्तबकनवकाशोकलतिकाविकाशः
कासारोपवनपवनोऽपि व्यथयति ॥ अपि भ्राम्यद्भृ-
ङ्गीरणितरमणीया न मुकुलप्रसूतिश्चूतानां सखि
शिखरिणीयं सुखयति ॥ २ ॥

पद—दुरालोकस्तोकस्तबकनवकाशोकलतिकाविकाशः १ कासारोपवनपवनः १ अपिऽ व्यथयति क्रि० अपि भ्राम्यद्भृङ्गीरणितरमणीया १ नऽ मुकुलप्रसूतिः ९ चूतानाम् ६ सखि १ शिखरिणी १ इयम् १ सुखयति क्रि० ॥ २ ॥

योजना—हे सखि दुरालोकस्तबकनवकाशोकलतिकाविकाशः कासारोपवनपवनः अपि माम् व्यथयति भ्राम्यद्भृङ्गीरणितरमणीया शिखरिणी इयम् चूतानां मुकुलप्रसूतिः अपि मां न सुखयति २

**भाषार्थ**—हे सखि ! दुःखसे देखने योग्य है अल्प गुच्छ जिसका ऐसी नवीन अशोककी लताका विकाश ( खिलना ) और सरोवरके निकटका पवन भी मुझे दुःख देता है और घूमती हुयी भ्रमरियोंके शब्दसे रमणीय ( मनोहर ) और मनोहर श्रेष्ठ है अग्रभाग जिसका ऐसे यह आम्रके वृक्षोंकी

मुकुलप्रसूति ( भोर ) भी मझे सुख नहीं देती अर्थात् दुःखित करती है ॥ २ ॥

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितं-भ्रू-
वल्लीकमलीकदर्शितभुजाबालार्द्धहस्तस्तनम् ॥
गोपीनां निभृतं निरीक्ष्य ललितां कांचिच्चिरं चिन्तय-
न्नन्तर्मुग्धमनोहरो हरतु वः क्लेशं नवः केशवः ॥ ३॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महा-
काव्ये अक्लेशकेशवो नाम द्वितीयः सर्गः ॥ २ ॥

पद--साकूतस्मितम् २ आकुलाकुलगलद्धम्मिल्लम् २ उल्लासितभ्रू-वल्लीकम् २ अलीकदर्शितभुजाबालार्द्धहस्तस्तनम् २ गोपीनाम् ६ निभृतम् २ निरीक्ष्यऽ ललिताम् २ कां २ चित्ऽचिरम्ऽ चिंतयन् १ अन्तःऽमुग्धमनोहरः १ हरतु क्रि०वः ६ क्लेशम् २ नवः १केशवः१।२

योजना--साकूतस्मितम् आकुलाकुलगलद्धम्मिल्लम् उल्लासितभ्रू-वल्लीकम् अलीकदर्शितभुजाबालार्द्धहस्तस्तनम् गोपीनां निभृतम् ( भावम् ) निरीक्ष्य कांचित् ललिताम् अन्तः चिरं चिन्तयन् मुग्ध-मनोहरः नवः केशवः वः ( युष्माकं ) क्लेशं हरतु ॥ ३ ॥

भाषार्थ--अभिप्रायसे युक्त है कुछ हंसी जिसमें, अत्यन्त अस्तव्यस्त गिरता है केशोंका जूडा जिसमें, ऊँची की है भृकु-टीरूप लता जिसमें; और जंभाई आदिके बहानेसे मिथ्याही दीखा है भुजा, बाल, आधा हाथ और स्तन, जिसमें ऐसे गोपियोंके अभिप्रायको जानकर किसी ललिता ( मनोहर ) गोपीको चिरकालतक मनमें ध्यान करते हुये मोहसे युक्त

सुंदर नवीन केशव भगवान् हे रसिकभक्तजनो ! आपके क्लेशको दूर करो ॥ ३ ॥

इति पं० मिहिरचन्द्रकृतगीतगोविन्दभाषाविकृतौ अक्लेश-केशवो नाम द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ३.

**कंसारिरपि संसारवासनाबन्धशृङ्खलाम् ॥ राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥**

पद–कंसारिः १ अपि॰ संसारवासनाबन्धशृङ्खलां राधाम् २ आधाय॰ हृदये ७ तत्याज क्रि॰ व्रजसुन्दरीः ॥ २ ॥ १ ॥

योजना–कंसारिः अपि संसारवासनाबन्धशृङ्खलां राधां हृदये आधाय व्रजसुन्दरीः तत्याज ॥ १ ॥

**भाषार्थ**–श्रीकृष्णचन्द्रजीभी संसारकी वासनाको बान्धनेकी शृंखलारूप राधाजीको मनमें स्थापनकरके व्रजसुन्दरियोंका त्याग करते भये ॥ १ ॥

**इतस्ततस्तामनुसृत्य राधिकामनङ्गबाणव्रणखिन्नमानसः ॥ कृतानुतापः स कलिन्दनंदिनीतटान्तकुञ्जे निषसाद माधवः ॥ २ ॥**

पद–इतःततः ताम् २ अनुसृत्य॰ राधिकाम् २ अनङ्गबाणव्रणखिन्नमानसः १ कृतानुतापः १ सः १ कलिंदनंदिनीतटान्तकुञ्जे ७ निषसाद क्रि॰ माधवः १ ॥ २ ॥

योजना–इतः ततः तां राधिकाम् अनुसृत्य अनङ्गबाणव्रणखिन्नमानसः कृतानुतापः सः माधवः कलिन्दनन्दिनीतटान्तकुञ्जे निषसाद क्रि॰ ॥ २ ॥

भाषार्थ-कामदेवके बाणोंसे पैदाहुए व्रण ( घाव ) से खिन्न ( दीन ) है मन जिनका और किया है पश्चात्ताप जिन्होंने ऐसे वे माधवजी भी इधर उधर उस राधिकाको ढूँढकर यमुनातटके समीपकी कुंजमें स्थित होते भये ॥ २ ॥

अथ सप्तमः प्रबन्धः गुर्जरीरागेण प्रतिमण्ठताले गीयते

॥७॥ मामियं चलिता विलोक्य वृतं वधूनिचयेन ॥
सापराधतया मयाऽपि न वारिताऽतिभयेन ॥ १ ॥
हरिहरि हतादरतया गता सा कुपितेव ॥ ध्रु० ॥

पद-माम् २ इयम् १ चलिता १ विलोक्य ऽ वृतम् २ वधूनिचयेन ३ सापराधतया ३ मया ३ अपि ऽ न ऽ वारिता १ अतिभयेन ३ हरि-हरि ऽ हतादरतया ३ गता १ सा १ कुपिता १ इव ऽ ॥ १ ॥

योजना-वधूनिचयेन वृतं मां विलोक्य चलिता इयं ( राधा ) सापराधतया अतिभयेन मया अपि न वारिता हतादरतया कुपिता इव गता इति हरिहरि इति खेदानुकारि पदम् ॥ १ ॥

भाषार्थ-गोपियोंके समूहसे वृत ( युक्त ) मुझे देखकर यह राधाजी यहांसे चलीगयी और किया है अपराध जिसने ऐसे मैंने भी अत्यंत भयके मारे निवारण न की, अर्थात् जाती हुयी न रोकी; नष्ट है आदर जिसका ऐसी वह कोप करके चली गई हरिहरि ( राम राम )

किं करिष्यति किं वदिष्यति सा चिरं विरहेण ॥
किं जनेन धनेन किं मम किं गृहेण सुखेन ॥२॥

पद-किम् १ करिष्यति क्रि० किम् १ वदिष्यति क्रि० सा १ चिरं ऽ

विरहेण ३ किम् १ जनेन ३ धनेन किम् १ मम ६ किम् १ गृहेण ३ सुखेन ३ ॥ २ ॥

योजना–सा राधा चिरं विरहेण किं करिष्यति किं वदिष्यति तां विना मम जनेन किं फलम् अस्ति धनेन गृहेण किं सुखेन किं न किमपि सर्वं निष्फलम् अस्तीति भावः ॥ २ ॥

**भाषार्थ**–वह राधा मेरे चिरकालके विरहमें विरहताप शांतिके लिये क्या उपाय करेगी और क्या कहेगी और उस राधाजीके विना मुझे अन्यगोपी आदिजनोंसे क्या प्रयोजन है क्यों कि उसके वियोगमें सबको त्याग दिया और धनसे क्या प्रयोजन है और घरसे क्या प्रयोजन है और सुखसे क्या प्रयोजन है अर्थात् राधाके वियोगमें पूर्वोक्त सब निष्फल (वृथा) हैं ॥ २ ॥

**चिन्तयामि तदाननं कुटिलभ्रु रोषभरेण ॥ शोण-**
**पद्ममिवोपरि भ्रमताऽऽकुलं भ्रमरेण ॥ ३ ॥**

पद–चिंतयामि क्रि० तदाननभ्रु २ कुटिलम् २ रोषभरेण ३ शोण पद्मम् २ इवऽ उपरि भ्रमता आकुलं २ भ्रमरेण ३ ॥ ३ ॥

योजना–उपरि भ्रमता भ्रमरेण आकुलं शोणपद्मम् इव रोषभरेण कुटिलभ्रु तदाननम् अहं चिंतयामि ॥ ३ ॥

**भाषार्थ**–क्रोधकी अधिकतासे कुटिल है भ्रुकुटी जिसकी और जो ऊपर भ्रमतेहुए भ्रमरोंसे व्याप्त हुए रक्त कमलके समान ऐसे उन राधाजीके मुखका मैं स्मरण करता हूं ॥ ३ ॥

**तामहं हृदि संगतामनिशं भृशं रमयामि ॥ किं**
**वनेऽनुसरामि तामिह किं वृथा विलपामि ॥ ४ ॥**

पद-ताम् २ अहम् १ हृदि ७ संगताम् २ अनिशम् २ भृशम्ऽ रमयामि क्रि० किम् १ वने ७ अनुसरामि क्रि० ताम् २ इहऽकिम्ऽ वृथाऽ विलपामि क्रि० ॥ ४ ॥

योजना-अहं हृदि संगतां तां राधाम् अनिशं भृशं रमयामि इह वने ताम् किम् (किमर्थम्) अनुसरामि वृथा किम् विलपामि क्रि० ४॥

भाषार्थ-यदि मैं हृदयमें संगत (स्थित) उस राधाजीके संग वारंवार अत्यंत रमण करता हूं तो इस वनमें क्यों राधाके पीछे २ फिरूं और क्यों वृथा विलाप करूं अर्थात् हृदयमें स्थित होनेसे विलाप आदि करना वृथा है ॥ ४ ॥

तन्वि खिन्नमसूयया हृदयं तवाकलयामि ॥ तन्न
वेद्मि कुतो गताऽसि न तेन तेऽनुनयामि ॥ ५ ॥

पद-तन्वि १ खिन्नम् २ असूयया ३ हृदयम् २ तव ६ आकलयामि क्रि० तत् २ नऽ वेद्मि क्रि०कुतःऽ गता १ असि क्रि० नऽ तेन ३ ते ४ अनुयामि क्रि० १ ॥

योजना-हे तन्वि अहं तव हृदयम् असूयया खिन्नम् आकलयामि त्वम् इतः ततः गता असि तत् अहं यतः न वेद्मि तेन ते (तुभ्यं) न अनुनयामि ॥ ५ ॥

भाषार्थ-हे तन्वि! (कोमलांगि) मैं आपके हृदयको असूया (न सहना) से खिन्न (दुःखी जानता हूं और यह नहीं जानता कि तू यहांसे कहां गयी हो इसीसे तुझको प्रसन्न भी नहीं करसक्ता अर्थात् अज्ञातजनको कोई भी प्रसन्न नहीं करसकता ॥ ५ ॥

दृश्यसे पुरतो गतागतमेव मे विदधासि ॥ किं
पुरेव ससम्भ्रमं परिरम्भणं न ददासि ॥ ६ ॥

पद-दृश्यसे क्रि०पुरतःऽ गतागतम् २ एवऽ मे ६ विदधासि क्रि० किम् १ पुरा इवऽ ससंभ्रमम् २ परिरम्भणम् २ नऽ ददासि क्रि०॥६॥

योजना-मे पुरतः एव त्वं गतागतं विदधासि इति मया त्वं दृश्यसे तर्हि पुरा इव ससम्भ्रमं परिरम्भणं किं न ददासि ॥ ६ ॥

**भाषार्थ**--हे राधे आप मेरे आगे ही आना जाना करती हुई मुझे दीखती हो तो पहिलेके समान वेगसे आलिंगन ( स्पर्श ) क्यों नहीं करती हो विरही मनुष्य चित्तके संबंधके सर्वत्र प्रियाको ही देखा करते हैं ॥ ६ ॥

**क्षम्यतामपरं कदाऽपि तवेदृशं न करोमि ॥ देहि सुन्दरी दर्शनं मम मन्मथेन दुनोमि ॥ ७ ॥**

पद-क्षम्यताम् क्रि० अपरम् २ इदम् १ कदाऽ अपिऽ तव ६ ईदृशम् २ नऽ करोमि क्रि०देहि क्रि०सुन्दरि १ दर्शनम् २ मम ६ मन्मथेन ३ दुनोमि क्रि० ॥ ७ ॥

योजना-हे सुन्दरि ( पूर्वं कृतम् आगः ) क्षम्यताम् तव अपरम् ईदृशम् अपराधं कदापि न करोमि अतः मम दर्शनं देहि अहं मन्मथेन दुनोमि ॥ ७ ॥

**भाषार्थ**-हे सुंदरि ! पिछले अपराध क्षमा करो अन्य ऐसा आपका अपराध कदाचित् भी न करूंगा इससे दर्शन देवो मैं कामदेवसे पीडित हूं ॥ ७ ॥

**वर्णितं जयदेवकेन हरेरिदं प्रणतेन ॥ किन्दुबिल्वसमुद्रसम्भवरोहिणीरमणेन ॥ ८ ॥**

**इति श्रीगीतगोविन्दे सप्तमः प्रबंधः ॥ ७ ॥**

पद-वर्णितम् १ जयदेवकेन ३ हरेः ६ इदम् १ प्रणतेन ३ किन्दुबिल्वसमुद्रसम्भवरोहिणीरमणेन ३॥ ८॥

योजना--हरेः प्रणतेन किन्दुबिल्वसमुद्रसम्भवरोहिणीरमणेन जयदेवकेन इदम् गीतम् वर्णितम् ॥ ८ ॥

**भाषार्थ**--हरि ( श्रीकृष्णजी ) के आराधनमें तत्पर और समुद्ररूप किन्दुबिल्वकुलमें उत्पन्न चंद्रमारूप जयदेवकविने यह गीत वर्णन किया है ॥ ८ ॥

इति श्रीगीतगोविन्दे सप्तमः प्रबन्धः ॥ ७ ॥

**हृदि बिसलताहारो नायं भुजङ्गमनायकः कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः॥ मलयजरसो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रान्त्याऽनङ्ग क्रुधा किमु धावसि ॥ १ ॥**

पद--हृदि ७ बिसलताहारः १ नऽ अयम् १ भुजङ्गमनायकः १ कुवलदयलश्रेणी १ कण्ठे ७ नऽ सा १ गरलद्युतिः १ मलयजरजः १ नऽइदम् १ भस्म १ प्रियारहिते ७ मयि ७ प्रहर क्रि०नऽ हरभ्रान्त्या ३ अनङ्ग १ क्रुधा ३ किम्ऽ उऽ धावसि क्रि० ॥ १ ॥

योजना--हे अनङ्ग क्रुधा किमु उ धावसि ।प्रियारहिते मयि हरभ्रान्त्या त्वं न प्रहर अयं मे हृदि बिसलताहारः अस्ति भुजङ्गमनायकः न कण्ठे कुवलदयलश्रेणी अस्ति सा गरलद्युतिः न इदं मलयजरजः अस्ति भस्म न अस्तीति ॥ १ ॥

**भाषार्थ**--हे कामदेव क्रोधसे मेरी तरफ क्यों दौडता है राधाजीसे रहित मेरे उपर महादेवके भ्रमसे क्रोध मत कर मेरे हृदयमें तो यह कमलकी बिसलताका हार है, शेष नहीं है और कंठमें नील कमलकी पंक्ति है नाकि यह विषकी कांति

और शरीरपर यह चंदनकी रज है, भस्म नहीं है इससे महादेव समझ व्यर्थ निरपराधी ऊपर क्यों प्रहार करता है ॥ १॥

पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्री-
डानिर्जितविश्व मूर्च्छितजनाघातेन किं पौरुषम् ॥
तस्या एव मृगीदृशो मनसिज प्रेङ्खत्कटाक्षानलज्वा-
लाजर्जरितं मनागपि मनो नाद्यापि सन्धुक्षते ॥२॥

पद-पाणौ ७ मा कुरु क्रि-चूतसायकम् २ अमुम् २ माऽ चापम् २ आरोपय क्रि० क्रीडानिर्जितविश्व १ मूर्च्छितजनाघातेन ३ किम्-पौरुषम् १ तस्याः ६ एवऽ मृगीदृशः ६ मनसिज १ प्रेङ्खत्कटाक्षानल-ज्वालाजर्जरितम् २ मनाक्ऽ अपिऽ मनः १ नऽ अद्यऽ अपिऽ सन्धु-क्षते क्रि० २ ॥

योजना-हे क्रीडानिर्जितविश्व कामदेव अमुं चूतसायकं पाणौ मा कुरु चापं मा आरोपय मूर्च्छितजनाघातेन किम् पौरुषम्, भवि-ष्यति हे मनसिज तस्या एव मृगीदृशःप्रेङ्खत्कटाक्षानलज्वालाजर्जरितं मनः मनाक् अपि न सन्धुक्षत ॥ २ ॥

भाषार्थ--हे लीलासे विश्वको जीतनेवाले कामदेव ! इस आम्रके पुष्परूपी बाणको हाथमें मत ले, और न धनुषपर चढाय, हे मनसिज अर्थात् मनसे उत्पन्न कामदेव ! मूर्च्छाको प्राप्तहुए मेरे सदृश जनकी पीडासे तेरा क्या पुरुषार्थ होगा अर्थात् कुछ न होगा; क्योंकि उसी मृगनयनी राधाजीके चलते हुए कटाक्षरूप अग्निकी ज्वालासे खण्ड खण्ड हुआ मेरा मन कुछ भी अबतक जीवनको नहीं धारता अर्थात् स्वस्थ नहीं है और अस्वस्थपर प्रहार करना धर्मके विरुद्ध है ॥ २॥

भ्रूपल्लवो धनुरपाङ्गतरङ्गितानि बाणा गुणः श्रवण-
पालिरिति स्मरेण॥ तस्यामनङ्गजयजङ्गमदेवता-
यामस्त्राणि निर्जितजगन्ति किमर्पितानि ॥ ३ ॥

पद—भ्रूपल्लवः १ धनुः १ अपाङ्गतरङ्गितानि १ बाणाः १ गुणः श्रवणपाली १ इतिऽ स्मरेण ३ तस्याम् ७ अनङ्गजयजङ्गमदेवतायाम् ७ अस्त्राणि १ निर्जितजगन्ति १ किम् १ अर्पितानि १ ॥ ३ ॥

योजना—भ्रूपल्लवः धनुः अस्ति अपाङ्गतरङ्गितानि बाणाः सन्ति श्रवणपाली गुणः अस्ति इति ( इत्थंप्रकारेण ) किम् अनङ्गजयजङ्गमदेवतायां तस्यां स्मरेण अस्त्राणि अर्पितानि ॥ ३ ॥

भाषार्थ—भृकुटी लता धनुष और कटाक्षोंकी तरंगवाले देखना बाण और कर्णप्रदेश गुण ( प्रत्यंचा ) इस प्रकारसे कामदेवने कामदेवकी जीतनेहारी जंगम देवतारूप उस राधाजीके शरीरमें क्या जगत्को जीतनेहारे अस्त्र अर्पितकरदिये हैं अर्थात् तर्कनासे प्रतीत होता है कि अवश्य करदिये हैं क्योंकि उनसे जगत्को जीतकर एक स्थानमें स्थापित करनाही कामदेवने उचित समझा होगा ॥ ३ ॥

भ्रूचापे निहितः कटाक्षविशिखो निर्मातु मर्मव्यथां
श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम्॥
मोहं तावदयं च तन्वि तनुतां बिम्बाधरो रागवान्सद्वृ-
त्तः स्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥ ४ ॥

पद—भ्रूचापे ७ निहितः १कटाक्षविशिखः १निर्मातु क्रि०मर्मव्यथाम् २ श्यामात्मा १ कुटिलः १ करोतु क्रि०कबरीभारः १ अपिऽ

मारोद्यमम् २ मोहम् २ तावत्ऽअयम् १ चऽ तन्वि १ तनुतां क्रि० बिम्बाधरः १ रागवान् १ सद्वृत्तः १ स्तनमण्डलः १ तव ६ कथम्ऽ प्राणैः ३ मम ६ क्रीडति क्रि० ॥ ४ ॥

योजना–हे तन्वि ( कृशाङ्गि ) भ्रूचापे निहितः कटाक्षविशिखः मर्मव्यथां निर्मातु श्यामात्मा कुटिलः कबरीभारः अपि मारोद्यमं करोतु च पुनः अयं रागवान् बिंबाधरः तावत् मोहं तनुतां तव सद्वृत्तः स्तनमण्डलः मम प्राणैः समं कथं क्रीडति ॥ ४ ॥

**भाषार्थ**–अब अपने मनमें स्थित राधाजीके प्रति अपने दुःखका वर्णन करते हैं भ्रुकुटीरूप धनुषपर लगा हुआ कटाक्ष-रूपी बाण मेरे मर्मोंको पीडित करे तो करो और श्याम और कुटिलकेशोंका समूह भी कामदेवको बढावै तो बढावो, क्योंकि जो भीतर मलीन और कुटिल होता है वह अन्यके मारनेमें यत्न करता ही है। और यह रागवाला अर्थात् रक्तवर्ण बिम्बाधर ( अधरोष्ठ ) मेरे मोहको विस्तृत करे तो करो, क्योंकि राग ( द्वेष ) वाला मोहको पैदा कर सक्ता है,परन्तु यह सद्वृत्त ( साधु-वा गोल ) तेरे स्तनोंका मण्डल मेरे प्राणोंके संग कैसे क्रीडा करता है, क्योंकि जो सदाचारी होते हैं वे पराये प्राणोंके घातक नहीं होते ॥ ४ ॥

तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमा-
स्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा ॥
सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि मन्मानसं तस्यां
लग्नसमाधि हन्त विरहव्याधिः कथं वर्तते ॥ ५ ॥

पद–तानि १ स्पर्शसुखानि १ ते १ चऽ तरलाः १ स्निग्धाः १ दृशोः ६ विभ्रमाः १ तत् १ वक्राम्बुजसौरभम् १ सः १ चऽ सुधास्यन्दी १ गिराम् ६ वक्रिमा १ सा १ बिम्बाधरमाधुरी १ इतिऽ विषयासङ्गे ७ अपिऽ मन्मानसम् १ तस्याम् ७ लग्नसमाधि १ हन्त विरहव्याधिः १ कथंऽ वर्तते क्रि० ॥ ५ ॥

योजना–स्पर्शसुखानि तानि सन्ति च पुनः तरलाः स्निग्धा दृशोः विभ्रमाः ते सन्ति वक्राम्बुजसौरभं तत् अस्ति च पुनः सुधास्यन्दी गिरां वक्रिमा सः अस्ति बिम्बाधरमाधुरी सा अस्ति इति विषयासङ्गे सति यत् मन्मानसं तस्यां लग्नसमाधि चेत् तर्हि हन्त ( इति खेदे ) विरहव्याधिः कथं वर्तते ॥ ५ ॥

भाषार्थ–नायिकाके संगमें जो होते हैं वे ही स्पर्श ( संगम ) के सुख मुझे हैं और वेही चंचल प्रेमसंयुक्त नेत्रोंके विलास हैं और वही मुखारविंदकी सुगंध है और वही अमृतकी भरी टेढी वाणी है और वही बिंबाधर ( रक्तओष्ठ ) की मधुरता है इस प्रकार रूपरसआदिविषयमें आसक्ति होनेपर भी जो मेरे मनकी उस राधिकाजीमें समाधि है अर्थात् लगा हुआ है तो हंत ( बडा खेद है ) विरहकी व्याधि कैसे विद्यमान है क्योंकि ध्यानसे युक्त योगीकी तो व्याधिका नाश हो जाता है ॥ ५ ॥

तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीत-
स्थानकृतावधानललनालक्षैर्न संलक्षिताः ॥ संमुग्धं
मधुसूदनस्य मधुरे राधामुखेन्दौ मृदुस्पन्दं कन्दलि-
ताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ ६ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महाकाव्ये मुग्धमधुसूदनो नाम तृतीयः सर्गः ॥ ३ ॥

पद-तिर्यक्कंठविलोलमौलितरलोत्तंसस्य ६ वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैः ३ नऽ संलक्षिताः १ संमुग्धम् २ मधुसूदनस्य ६ मधुरे ७ राधामुखेन्दौ ७ मृदुस्पन्दम् २ कन्दलिताः १ चिरंऽ ददतु क्रि० वः ६ क्षेमम् २ कटाक्षोर्मयः १ ॥ ६ ॥

योजना--वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैः न संलक्षिताः मधुरे राधामुखेन्दौ संमुग्धं मृदुस्पंन्दं यथा स्यात्तथा कन्दलिताः तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य मधुसूदनस्य कटाक्षोर्मयः वः ( युष्माकं ) चिरं क्षेमं ददतु ॥ ६ ॥

**भाषार्थ**-सुंदर राधाजीके मुखरूप चंद्रमामें अप्रकट और किंचित् चलकर पल्लवित ( बढी हुई ) और वंशीसे निकसे ( गाये ) गीतके स्थानमें लगा है मन जिनका ऐसे लक्षों अंगना ( गोपी ) ओंने नहीं देखी तिरछा है कंठ जिसका चंचल है मस्तक जिसका और चंचल हैं भूषण जिसके ऐसे मधुसूदनके कटाक्षरूप तरंग तुम ( भक्तों ) का चिरकालतक कल्याण दो ॥ ६ ॥

इति श्रीपं० मिहिरचंद्रकृतश्रीगीतगोविंदभाषाविवृतौ
मुग्धमधुसूदनो नाम तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ४.

**यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ॥**
**प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥ १ ॥**

पद-यमुनातीरवानीरनिकुञ्जे ७ मन्दम् २ आस्थितम् २ प्राह क्रि० प्रेमभरोद्भ्रान्तम् २ माधवम् २ राधिकासखी १ ॥

योजना–राधिकासखी यमुनातीरवानीरनिकुंजे मन्दं यथा स्यात्तथा आस्थितं प्रेमभरोद्भ्रान्तं माधवं प्रति प्राह ॥ १ ॥

**भाषार्थ**–यमुनाके तीरपर बेतोंकी कुंजमें तूष्णीम् ( चूप-चाप बैठे हुये और प्रेमकी अधिकतासे उद्विग्न मन माधव ( श्रीकृष्णचंद्रजी ) के प्रति राधिकाकी सखी यह वचन बोली ॥ १ ॥

**अथाष्टमःप्रबन्धःकर्णाटकरागेण एकतालीताले गीयते ८ निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरम् ॥ व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम् ॥ १ ॥ सा विरहे तव दीना ॥ माधव मनसिजविशिखभयादिव भावनया त्वयि लीना॥ध्रु०॥**

पद–निन्दति क्रि०चन्दनम् २ इंदुकिरणम् २ अनुविंदति क्रि०खेदम् २ अधीरम् २ व्यालनिलयमिलनेन ३ गरलम् २ इवऽ कलयति क्रि०मलयसमीरम् २ सा १ विरहे ७ तव ६ दीना १ माधव १ मनसिजविशिखभयात् ५ इवऽ भावनया ३ त्वयि ७ लीना १ ॥ १॥

योजना–हे माधव तव विरहे दीना मनसिजविशिखभयात् भावनया त्वयि लीना इव सा ( राधा ) चन्दनं निन्दति इन्दुकिरणम् अनु ( दृष्ट्वा ) अधीरं खेदं विन्दति मलयसमीरं व्यालनिलयमिलनेन गरलम् इव कलयति ( मन्यते ) क्रि० ॥ १ ॥

**भाषार्थ**–हे माधव ! आपके विरहमें दीन (दुःखित) और कामदेवके बाणोंके भयसे मनोभावना ( चिंतन ) से तेरेमें लीन ( प्रविष्ट ) अर्थात् श्रीकृष्णचंद्रजीके हृदयमें प्रवेश हुई मुझे कामदेव पीडा न देगा इस बुद्धिसे तेरेमें लीन वह राधाजी चंद-

नकी भी निंदा करती है और चंद्रमाकी किरणोंको देखकर भी अत्यंत खेदको प्राप्त होती है सर्पोंका स्थान होनेसे मलयगिरिके पवनको भी विषके समान मानती है अर्थात् इन सबसे भी राधाजीको सुख नहीं होता इससे प्रतीत होता है कि राधाजीको आपका वियोगही दुःखदायी है ॥ १ ॥

**अविरलनिपतितमदनशरादिव भवदवनाय विशालम् ॥ स्वहृदयमर्मणि वर्म करोति सजलनलिनीदलजालम् ॥ २ ॥**

पद-अविरलनिपतितमदनशरात् ५ इव ऽ भवदवनाय ४ विशालम् २ स्वहृदयमर्मणि ७ वर्म २ करोति क्रि० सजलनलिनीदलजालम् २ ॥ २ ॥

योजना-सा पूर्वोक्ता राधा अविरलनिपतितमदनशरात् भवदवनाय इव स्वहृदयमर्मणि सजलनलिनीदलजालम् विशालं वर्म करोति २

**भाषार्थ**-हे श्रीकृष्णचंद्रजी ! वह राधाजी निरंतर पडते हुये कामदेवके बाणोंसे अपने ( राधाके ) हृदयमें स्थित आपकी रक्षाके लिये अपने हृदयरूप मर्मपर जलसहित कमलके पत्तोंके समूहरूप सुंदर वर्म ( संजोआ ) को करती हैं अर्थात् आप राधाजीके हृदयमें सर्वदा विद्यमान हो ॥ २ ॥

**कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ॥ व्रतमिव तव परिरम्भसुखाय करोति कुसुमशयनीयम् ॥ ३ ॥**

पद-कुसुमविशिखशरतल्पम् २ अनल्पविलासकलाकमनीयम् २

व्रतम् २ इव ऽ तव ६ परिरम्भसुखाय ४ करोति क्रि० कुसुमशयनीयम् २ ॥ ३ ॥

योजना-हे कृष्ण सा तव परिरंभसुखाय अनल्पविलासकलाकमनीयम् कुसुमविशिखशरतल्पम् व्रतम् इव कुसुमशयनीयम् करोति ॥३॥

**भाषार्थ**-हे श्रीकृष्णचंद्र ! वह राधाजी आपके आलिंगन सुखकी प्राप्तिके लिये कामदेवके बाणोंकी शरशय्या है जिसमें ऐसे व्रतके समान और अनेक क्रीडाओंके लिये सुंदर पुष्पशय्याको करती हैं अर्थात् आपकी प्राप्तिके लिये शरशय्यारूप दारुण व्रत कर रही हैं ॥ ३ ॥

वहति च चलितविलोचनजलधरमाननकमलमुदारम् ६ विधुमिव विकटविधुंतुददन्तदलनगलितामृतधारम् ॥ ४ ॥

पद--वहति क्रि० च ऽ चलितविलोचनजलधारम् २ आननकमलम् २ उदारम् २ विधुम् २ इव ऽ विकटां विधुन्तुददन्तदलनगलितामृतधारम् ॥ २ ॥ ४ ॥

योजना-किन्च सा राधा विकटविधुंतुददंतलनगलितामृतधारम् विधुम् इव चलितविलोचनजलधारम् उदारम् आननकमलम् वहति ४ ॥

**भाषार्थ**-हे श्रीकृष्णचंद्र ! वह राधाजी दारुणराहुके दांतोंके दलनेसे निकसी है अमृतकी धारा जिससे ऐसे चंद्रमाके समान चली है जलधारा जिसमें ऐसे नेत्रवाले और मनोहर मुखारविंदको धारण करती है अर्थात् आपके वियोगसे रोती है ४ ॥

विलिखति रहसि कुरङ्गमदेन भवन्तमसमशरभूतम् ॥ प्रणमति मकरमधो विनिधाय करे च शरं नवचूतम् ॥ ५ ॥

पद–विलिखति क्रि०रहसि ७ कुरङ्गमदेन ६ भवन्तम् २ असमशरभूतम् २ प्रणमति क्रि० मकरम् २ अधः ऽ विनिधायऽ करे ७ चऽ शरम् २ नवचूतम् २॥ ५ ॥

योजना–सा राधा कुरङ्गमदेन असमशरभूतम् भवंतम् रहसि विलिखति तव अधः मकरम् च पुनः तव करे नवचूतम् शरं विनिधाय प्रणमति ॥ ५ ॥

**भाषार्थ**–हे श्रीकृष्णचंद्र ! वह राधा कामदेवरूप आपको एकांतमें लिखती है और आपकी मूर्तिके नीचे मकर ( मकररूप वाहन) को और आपके हाथमें नवीन आम्ररूप ( कामदेवके ) बाणको लिखकर प्रणाम करती है ॥ ५ ॥

**प्रतिपदमिदमपि निगदति माधव तव चरणे पतिताऽहम् ॥ त्वयि विमुखे मयि सपदि सुधानिधिरपि तनुते तनुदाहम् ॥ ६ ॥**

पद–प्रतिपदम् २ इदम् २ अपिऽ निगदति क्रि०माधव १ तव ६ चरणे ७ पतिता १ अहं त्वयि ७ विमुखे ७ मयि ७ सपदिऽ सुधानिधिः १ अपिऽ तनुते क्रि०तनुदाहम् २ ॥ ६ ॥

योजना–हे श्रीकृष्ण सा राधा यतः त्वयि विमुखे सति मयि सुधानिधिः अपि तनुदाहं तनुते अतः हे माधव अहं तव चरणे पतिता इदम् अपि प्रतिपदं निगदति ॥ ६ ॥

**भाषार्थ**–हे श्रीकृष्ण ! वह राधा क्षणक्षणमें यह भी कहती है कि हे माधव मैं आपके चरणोंमें इससे पडी हूं कि आपके विमुख होनेपर चंद्रमा शरीरको दग्ध करता है ॥ ६ ॥

**ध्यानलयेन पुरः परिकल्प्य भवतमतीव दुरापम् ॥ विलपति हसति विषीदति रोदिति चंचति मुंचति तापम् ॥ ७ ॥**

पद-ध्यानलयेन ३ पुरःऽ परिकल्प्यऽ भवन्तम् २ अतीवऽ दुरापम् २ विलपति क्रि०हसति क्रि०विषीदति। क्रि०रोदिति क्रि०चंचति क्रि०मुंचति क्रि०तापम् २ ॥ ७ ॥

योजना-हे श्रीकृष्ण ! सा राधा अतीव दुरापं भवन्तं ध्यानलयेन पुरः परिकल्प्य विलपति हसति विषीदति रोदिति चंचति तापं मुंचति ॥ ७ ॥

भाषार्थ-हे श्रीकृष्णचन्द्रजी ! वह राधा ध्यानमें चित्तकी एकाग्रतासे दूतियोंके द्वारा भी दुराप ( दुर्लभ ) आपको अपने आगे कल्पना करके मेरे संग अब भी स्नेह नहीं करते ऐसे विलाप करती है हसती है दुःखी होती है रोती है अन्य स्थानमें आपके संगके लिये चली जाती है और इसीसे अंतःकरणके दुःखसे कभी कभी मनके दुःखको भी त्यागती है ॥ ७ ॥

श्रीजयदेवभणितमिदमधिकं यदि मनसा नटनीयम् ॥
हरिविरहाकुलबल्लवयुवतिसखीवचनं पठनीयम् ॥ ८॥

इति श्रीगीतगोविन्दे अष्टमः प्रबंधः ॥ ८ ॥

पद-श्रीजयदेवभणितम् १ इदम् १ अधिकम् १ यदिऽ मनसा ३ नटनीयम् १ हरिविरहाकुलबल्लवयुवतिसखीवचनम् १ पठनीयम्॥१८॥

योजना-यदि जयदेवभणितम् इदम् मनसा अधिकं नटनीयम् तर्हि हरिविरहाकुलबल्लवयुवतिसखीवचनम् पठनीयम् ॥ ८ ॥

भाषार्थ-हे भक्तजनों ! जो श्रीजयदेवके कहे इस गीतका मनसे अधिकतासे नृत्य किया चाहो अर्थात् नृत्यके समय इसका वर्णन चाहो तो श्रीकृष्णचंद्रजीके वियोगसे व्याकुल राधाजीकी सखीके वचनको पढो ॥ ७ ॥

इति श्रीगीतगोविंदभाषाविवृतौ अष्टमः प्रबंधः ॥ ८ ॥

**आवासो विपिनायते प्रियसखीमालाऽपि जालायते तापोऽपि श्वसितेन दावदहनज्वालाकलापायते॥ सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं कन्दर्पोऽपि यमायते विरचयञ्छार्दूलविक्रीडितम् ॥ १ ॥**

पद—आवासः १ विपिनायते क्रि० प्रियसखीमाला १ अपिऽ जालायते क्रि० तापः १ अपिऽ श्वसितेन ३ दावदहनज्वालाकलापायते क्रि० सा १ अपिऽ त्वद्विरहेण ३ हन्तऽ हरिणीरूपायते क्रि० हाऽ कथंऽ कन्दर्पः १ अपिऽ यमायते क्रि० विरचयन् १ शार्दूलविक्रीडितम् २॥१॥

योजना—तस्याः राधायाः आवासः विपिनायते प्रियसखिमाला अपि जालायते तापः अपि श्वसितेन दावदहनज्वालाकलापायते त्वद्विरहेण सा अपि हन्त ( इति खेदे ) हरिणीरूपायते हा ( कष्टम् ) कन्दर्पः अपि शार्दूलविक्रीडितं रचयन् यमायते ॥ १ ॥

**भाषार्थ**—अब गीतमें कहे अर्थका श्लोकमें वर्णन करते हैं—हे श्रीकृष्णचंद्रजी ! उस राधाजीको घर भी वनके समान प्रतीत होता है और प्यारी सखियोंकी पंक्ति भी जालकी समान प्रतीत होती है और देहका दाह भी ऊर्ध्वश्वाससे दावाग्निकी ज्वालाके समूहतुल्य प्रतीत होता है और खेदकी बात है कि वह राधा भी आपके वियोगसे हरिणीके समान प्रतीत होती है और कष्टकी बात है कि शार्दूलकी चेष्टा करता हूआ कामदेव भी क्यों यमराजके समान आचरण करता है अर्थात् हरिणीरूप राधाजीको शार्दूलरूपी यमराज आपके वियोगसे मारा चाहता है ॥ १ ॥

**अथ नवमःप्रबन्धो देशाख्यरागेण एकतालीताले गीयते९**

स्तनविनिहितमपि हारमुदारम् ॥ सा मनुते कृशतनुरिव भारम् ॥ १ ॥ राधिका विरहे तव केशव ॥ ध्रु० ॥

पद—स्तनविनिहितम् २ अपिऽ हारम् २ उदारम् २ सा १ मनुते क्रि०कृशतनुः १ इवऽभारम् २ राधिका १ विरहे ७ तव ६ केशव१॥१॥

योजना—हे केशव तव विरहे सति सा राधिका कृशतनुः सती स्तननिहितम् उदारम् अपि हारं भारम् इव मनुते ॥ १ ॥

भाषार्थ—हे श्रीकृष्णचंद्रजी ! आपका विरह होनेपर वह राधिकाजी शरीरके कृश होनेसे स्तनोंपर रक्खे हुए भी उत्तम हारको भारके समान मानती है ॥ १ ॥

सरसमसृणमपि मलयजपङ्कम् ॥ पश्यति विषमिव वपुषि सशङ्कम् ॥ २ ॥

पद—सरसमसृणम् २ अपिऽ मलयजपङ्कम् २ पश्यति क्रि० विषम् २ इवऽ वपुषि ७ सशङ्कम् ॥ २ ॥

योजना—हे केशव सा राधा सरसमसृणम् अपि मलयजपङ्कं वपुषि सशङ्कम् विषम् इव पश्यति ॥ २ ॥

भाषार्थ—हे श्रीकृष्णचंद्रजी ! वह राधाजी गीले और चिकने मलयगिरिचंदनके लेपको भी आपके विरहमें शंकासे विषके समान देखती है ॥ २ ॥

श्वसितपवनमनुपमपरिणाहम् ॥ मदनदहनमिव वहति सदाहम् ॥ ३ ॥

पद—श्वसितपवनम् २ अनुपमपरिणाहम् २ मदनदहनम् २ इवऽ वहति क्रि० सदाहम् २ ॥ ३ ॥

योजना—अनुपमपरिणाहं सदाहं श्वसितपवनं मदनदहनम् इव वहति ॥ ३ ॥

भाषार्थ–हे श्रीकृष्णचंद्रजी ! वह राधाजी अत्यंत लम्बे २ श्वासोंकी दाह करनेवाली पवनको कामदेवकी अग्निके समान धारती है अर्थात् श्वासकी पवन भी उन्हें दग्ध करती है॥ ३॥

दिशिदिशि किरति सजलकणजालम् ॥ नयन-
नलिनमिव विगलितनालम् ॥ ४ ॥

पद–दिशि ७ दिशि ७ किरति क्रि० सजलकणजालम् २ नयननलिनम् २ इव ऽ विगलितनालम् २ ॥ ४ ॥

योजना–सा राधा सजलकणजालं विगलितनालम् इव नयननलिनं दिशिदिशि किरति ॥ ४ ॥

भाषार्थ–वह राधाजी अश्रुओंकी बूंदोंका है समूह जिसमें और नष्ट हुआ है नाल जिसका ऐसे नेत्रकमलको चारों दिशाओंमें फैंकती है अर्थात् आपके दर्शनकी इच्छासे देखती है॥ ४॥

नयनविषयमपि किसलयतल्पम् ॥ कलयति विहित-
हुताशविकल्पम् ॥ ५ ॥

पद–नयनविषयम् २ अपि ऽ किसलयतल्पम् २ कलयति क्रि० विहितहुताशविकल्पम् २ ॥ ५ ॥

योजना–सा राधा नयनविषयम् अपि किसलयतल्पं विहितहुताशविकल्पं कलयति ॥ ५ ॥

भाषार्थ–हे श्रीकृष्णचंद्रजी ! वह राधाजी आपके वियोगमें नेत्रोंसे दीखती हुई भी कमलोंकी शय्याको संदेहसे अग्निके समान मानती है ॥ ५ ॥

त्यजति न पाणितलेन कपोलम् ॥ बालशशिनमिव
सायमलोलम् ॥ ६ ॥

पद-त्यजाति क्रि-नऽ पाणितलेन ३ कपोलम् २ बालशशिनम् २ इवऽ सायम् ऽ अलोलम् २ ॥ ६ ॥

योजना-सा सायम् अलोलं बालशशिनम् इव कपोलं पाणितलेन न त्यजति ॥ ६ ॥

**भाषार्थ**-हे श्रीकृष्णचंद्रजी ! वह राधाजी सायंकालके निश्चल बालचंद्रके समान कपोलको पाणिं ( हाथ ) के तलसे नहीं त्यागती अर्थात् शोकसे हाथके तलपर कपोलको रखकर बैठी है ॥ ६ ॥

**हरिरितिहरिरिति जपति सकामा ॥ विरहविहितमरणेव निकामम् ॥ ७ ॥**

पद-हरिः १ इतिऽ हरिः १ इतिऽ जपति क्रि०सकामम् २ विरहविहितमरणा १ इवऽ निकामम् १ ॥ ७ ॥

योजना-सा राधा विरहविहितमरणा इव निकामं हरिः इति हरिः इति सकामं जपति ॥ ७ ॥

**भाषार्थ**-हे श्रीकृष्णचंद्रजी ! वह राधाजी आपके वियोगसे किया है स्मरण जिसने उसके समान निरंतर और अत्यंत अभिलाषासे हरि हरि जपती है अर्थात् अंतसमयमें भगवद्भजन करती है ॥ ७ ॥

**श्रीजयदेवभणितमिति गीतम् ॥ सुखयतु केशवपदमुपनीतम् ॥ ८ ॥**

**इति श्रीगीतगोविन्दे नवमः प्रबंधः ॥ ९ ॥**

पद-श्रीजयदेवभणितम् १ इति १ गीतम् १ सुखयतु क्रि० केशवपदम् २ उपनीतम् २ ॥ ८ ॥

योजना–केशवपदम् उपनीतं श्रीजयदेवभणितम् इति गीतं भक्तान् सुखयतु ॥ ८ ॥

**भाषार्थ**–केशवके चरणोंमें अर्पण किया हुआ यह जयदेवका कहा गीत भक्तजनोंको सुख दो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ नवमः प्रबन्धः ॥ ९ ॥

**सा रोमाञ्चति सीत्करोति विलपत्युत्कम्पते ताम्यति**
**ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि॥**
**एतावत्यतनुज्वरे वरतनुर्जीवेन्न किं ते रसात्स्ववैद्य-**
**प्रतिम प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः ॥ १॥**

पद–सा १ रोमाञ्चति क्रि० सीत्करोति क्रि० विलपति क्रि० उत्कम्पते ताम्यति क्रि० ध्यायति क्रि० उद्भ्रमति क्रि० प्रमीलति क्रि० पतति क्रि उद्याति क्रि० मूर्च्छति क्रि० अपिऽ एतावति ७ अतनुज्वरे ७ वरतनुः १ जीवेत् क्रि० नऽ किम् ते ६ रसात् ५ स्ववैद्यप्रतिम १ प्रसीदसि क्रि० यदिऽ त्यक्तः १ अन्यथाऽ हस्तकः १ ॥ १ ॥

योजना–सा राधा रोमाञ्चति सीत्करोति विलपति उत्कम्पते ताम्यति ध्यायति उद्भ्रमति प्रमीलति पतति उद्याति मूर्च्छति अपि एतावति अतनुज्वरे सति हे स्ववैद्यप्रतिम यदि त्वं प्रसीदसि सा वरतनुः ते रसात् किं न जीवेत् ! अपि तु जीवदेव अन्यथा ( न प्रसीदसि चेत् ) हस्तकः त्यक्तः॥ १ ॥

**भाषार्थ**–हे श्रीकृष्णचंद्रजी इस राधाजीके रामांचे खडे हैं सीत्कार शब्द करती है विलाप करती हैं कंपती हैं ग्लानिको प्राप्त होती है चिंता करती हैं अत्यंत भ्रमको प्राप्त होती हैं नेत्रोंको मीचती हैं शय्या आदिमें पडती हैं ऊंची खडी होती हैं–मूर्छाको प्राप्त होती हैं ये सब हैं ज्वरके चिह्न जिसके ऐसे

उग्र ज्वर होनेपर हे अश्विनीकुमारवैद्यके तुल्य यदि आप प्रसन्न होजाओगे तो क्या वह राधाजी आपके रस ( शृंगार वा औषध ) से न जीवेंगी अर्थात् अवश्य जीवेंगी और यदि आप प्रसन्न न होंगे तो हाथ त्याग दिया अर्थात् हाथ छोड बैठे वह अवश्य मर जायगी ॥ १ ॥

**स्मरातुरां दैवतवैद्यहृद्य त्वदङ्गसङ्गामृतमात्रसाध्याम् ॥ विमुक्तबाधां कुरुषे न राधामुपेंद्रवज्रादपि दारुणोऽसि २॥**

पद—स्मरातुराम् २ दैवतवैद्यहृद्य १ त्वदङ्गसङ्गामृतमात्रसाध्याम् २ विमुक्तबाधाम् २ कुरुषे क्रि० नऽ राधाम् २ उपेंद्र (१) वज्रात् ५ अपिऽ दारुणः १ असि क्रि० ॥ २ ॥

योजना—हे दैवतवैद्यहृद्य हे उपेंद्र स्मरातुरां त्वदङ्गसङ्गामृतमात्र-साध्यां राधां त्वं विमुक्तबाधां न कुरुषे चेत् त्वं वज्रादपि दारुणः असि ॥ २ ॥

**भाषार्थ**—हे अश्विनीकुमारवैद्यके समान सुन्दर और हे उपेंद्र ( वामनरूप ) कामदेवसे पीडित और आपके अंग संगरूपअमृतसे साध्य ( चिकित्साके योग्य ) राधाजीकी बाधाको आप दूर न करोगे तो वज्रसे भी दारुण आप हो ॥ २ ॥

**कन्दर्पज्वरसञ्ज्वराकुलतनोराश्चर्यमस्याश्चिरं चेतश्चन्दन-चन्द्रमःकमलिनीचिन्तासु संताम्यति ॥ किं तु क्षान्ति-वशेन शीतलतनुं त्वामेवमेकं प्रियं ध्यायन्ती रहसि स्थिता कथमसौ क्षीणा क्षणं प्राणिति ॥ ३ ॥**

पद—कन्दर्पज्वरसञ्ज्वराकुलतनोः ६ आश्चर्यम् १ अस्याः ६ चिरंऽ चेतः १ चन्दनचन्द्रमःकमलिनीचिन्तासु ७ संताम्यति क्रि० किन्तुऽ

क्षांतिवशेन ३ शीतलतनुम् २ त्वाम् २ एवम्ऽ एकं २ प्रियं २ ध्यायन्ती १ रहसि ७ स्थिता १ कथम्ऽ असौ १ क्षीणा १ क्षणं २ प्राणिति क्रि० ॥ ३ ॥

योजना—कंदर्पज्वरसंज्वराकुलतनोः अस्याः चेतः चन्दनचन्द्रमः कमलिनीचिंतासु चिरं संताम्यति इति आश्चर्यम् किंतु रहसि स्थिता, क्षांतिवशेन शीतलतनुम् एकं प्रियम् त्वाम् एवं क्षणं ध्यायन्ती असौ क्षीणा कथं प्राणिति ॥ ३ ॥

भाषार्थ—कामदेवके ज्वरकी पीडासे व्याकुल है शरीर जिसका ऐसी इन राधाजीका चित्त चंदन, चंद्रमा, कमलिनी इनके स्मरणसे भी चिरकालतक ग्लानिको प्राप्त होता है यह बडा आश्चर्य है किंतु एकांतमें बैठी शीतलशरीर और ऐसे रूप-वाले असाधारण प्यारे आपका ध्यान करती हुई और कृश है अङ्ग जिनका ऐसी वे राधाजी इस क्षणमें न आवे तो दूसरे क्षणमें आवेंगे इस आशाके वशसे कथंचित् जीवती है अर्थात् राधाजीका जीवन आपके स्मरणसे ही है ॥ ३ ॥

क्षणमपि विरहः पुरा न सेहे नयननिमीलनखि-
न्नया यया ते ॥ श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥ ४ ॥

पद—क्षणम् २ अपिऽ विरहः १ पुराऽ सेहे क्रि० नयननिमीलनखिन्नया ३ यया ३ ते ६ श्वसिति क्रि० कथम्ऽ असौ १ रसालशाखां २ चिरविरहेण ३ विलोक्यऽ पुष्पिताग्राम् १ ॥ ४ ॥

योजना—हे श्रीकृष्णचन्द्र नयननिमीलनखिन्नया यया ते विरहः पुरा क्षणम् अपि न सेहे असौ ( राधा ) पुष्पिताग्रां रसालशाखां विलोक्य चिरविरहेण कथं श्वसिति ॥ ४ ॥

भाषार्थ-हे श्रीकृष्णचंद्रजी ! नेत्रोंकी पलको मीचनेसे दुःखी हुई जिस राधाजीने आपका विरह क्षणमात्र भी न सहाथा अब वह राधाजी चिरकालतक आपके विहरमें फलोंसहित है अग्रभाग जिसकी ऐसी आम्रकी शाखाको देखकर किस प्रकार जीवती होगी अथात् उसका जीवन कठिन है ॥ ४ ॥

वृष्टिव्याकुलगोकुलावनरसादुद्धृत्य गोवर्द्धनं बिभ्र-
द्वल्लवसुन्दरीभिरधिकानन्दाच्चिरं चुम्बितः ॥कंद-
र्पेणतदर्पिताधरतटीसिंदूरमुद्रांकितो बाहुर्गोपत-
नोस्तनोतु भवतः श्रेयांसि कंसद्विषः ॥ ५ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महा-
काव्ये स्निग्धमाधवो नाम चतुर्थः सर्गः ॥ ४ ॥

पद-वृष्टिव्याकुलगोकुलावनरसात् ५ उद्धृत्यऽ गोवर्द्धनम् २ बिभ्रत् १ बल्लवसुन्दरीभिः ३ अधिकानन्दात् ५ चिरंऽ चुंबितः १ कंदर्पेण ३ तदर्पिताधरतटीसिन्दूरमुद्राङ्कितः १ बाहुः १ गोपतनोः ६ तनोतु क्रि० भवतः ६ श्रेयांसि २ कंसद्विषः ६ ॥ ५ ॥

योजना-वृष्टिव्याकुलगोकुलावनरसात् गोवर्द्धनम् उद्धृत्य चिरं बिभ्रत् अधिकानन्दात् वल्लवसुन्दरीभिः चुम्बितः-कन्दर्पेण तदर्पिता धरतटीसिन्दूरमुद्राङ्कितः कंसद्विषः गोपतनोः बाहुः भवतः श्रेयांसि तनोतु ॥ ५ ॥

भाषार्थ-वृष्टिसे व्याकुल गोकुलकी रक्षासे अनुरागसे गोवर्द्धनका चिरकालतक धारण करता हुआ और व्रजसुंदरी (गोपी) योंने अधिक आनंदसे किया है चुंबन जिसका और इसीसे कामदेव केशवसे गोपियोंने भुजापर लगाया जो बिंबाधर उसमें लगे

सिंदूरसे अंकित ऐसी कंसके शत्रु गोपरूप श्रीकृष्णचंद्रजीकी भुजा तुम भक्तोंका कल्याण करो ॥ ५ ॥

इति श्रीपं० जयदेवकृते-गीतगोविंदे पं० मिहिरचंद्र कृतभाषाविवृतिसहिते चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ५.

**अहमिह निवसामि याहि राधामनुनय मद्वचनेन चानयेथाः ॥ इति मधुरिपुणा सखी नियुक्ता स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥**

पद--अहम् १ इहऽनिवसामि क्रि०याहि क्रि०राधाम् २ अनुनय क्रि० मद्वचनेन ३ चऽ आनयेथाः क्रि० इतिऽ मधुरिपुणा ३सखी १नि-युक्ता १ स्वयम्ऽ इदम् २ एत्यऽ पुनःऽ जगाद क्रि०राधाम् २ ॥१॥

योजना--अहम् इह निवसामि त्वं याहि, मद्वचनेन राधाम् अनुनय च पुनः आनयेथाः, मधुरिपुणा इति नियुक्ता सखी स्वयम् एत्य राधाम् पुनः इदम् वचनं जगाद ॥ १ ॥

**भाषार्थ**—मैं इसी कुञ्जमें वसूंगा मेरे वचनसे राधाजीका अनुनय ( शांति ) कर और मेरे समीप लेआ यह कहकर प्रेरी हुई सखी स्वयं जाकर राधाजीके प्रति यह वक्ष्यमाण ( जो आगे कहेंगे ) वचन बोली ॥ १ ॥

**अथ दशमप्रबन्धो वराडिरागेण रूपकतालेन गीयते १०॥**

**वहति मलयसमीरे मदनमुपनिधाय ॥ स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ॥ १ ॥ तव विरहे वनमाली सखि सीदति ॥ ध्रु० ॥**

पद-वहति ७ मलयसमीरे ७ मदनम् २ उपनिधायऽ स्फुटति ७ कुसुमनिकरे ७ विरहिहृदयदलनाय ४ तव ६ विरहे ७ वनमाली १ सखि १ सीदति क्रि० ॥ १ ॥

योजना-हे सखि ( राधे ) मदनम् उपनिधाय मलयसमीरे वहति सति विरहिहृदयदलनाय कुसुमनिकरे स्फुटति सति तव विरहे वनमाली सीदति ( दुःखीभवति ) ॥ १ ॥

**भाषार्थ-**हे राधाजी ! जिससमय, कामदेवको सहाय बना कर मलयाचल ( दक्षिण ) का पवन चलता है और विरही मनुष्योंके हृदय छेदनके लिये पुष्पोंका समूह खिलता है उस समय तेरे विरहमें वनमाली (श्रीकृष्णचंद्रजी) दुःखी होते हैं १।

**दहति शिशिरमयूखे मरणमनुकरोति पतति ॥**
**मदनविशिखे विलपति विकलतरोऽति ॥ २ ॥**

पद-दहति ७ शिशिरमयूखे ७ मरणम् २ अनुकरोति क्रि०पतति ७ मदनविशिखे ७ विलपति क्रि० विकलतरः १ अतिऽ ॥ २ ॥

योजना-हे राधे शिशिरमयूखे दहति सति मरणम् अनुकरोति मदनविशिखे पतति सति, अतिविकलतरः ( सन् ) विलपति ॥ २ ॥

**भाषार्थ-**हे राधेजी ! जिस समय शीतकी किरण दुःख देती हैं उस समय श्रीकृष्णचंद्रजी मृत्युकी पीडाके समान दुःख पाते हैं अर्थात् तुम्हारी प्राप्तिकी आशासे कष्टसे जी रहे हैं और जिस समय कामदेवके बाण लगते हैं उस समय विह्वल होकर अत्यंत विलाप करते हैं ॥ २ ॥

**ध्वनति मधुपसमूहे श्रवणमपि दधाति ॥ मनसि**
**वलितविरहे निशिनिशि रुजमुपयाति ॥ ३ ॥**

पद--ध्वनाति७ मधुपसमूहे ७ श्रवणम् २ अपि ऽ दधाति क्रि०मनसि ७ वलितविरहे ७ निशि ७ निशि ७ रुजम् २ उपयाति क्रि० ॥ ३ ॥

योजना--मधुपसमूहे ध्वनति सति श्रवणम् अपि दधाति मनसि वलितविरहे सति निशि निशि रुजम् उपयाति ॥ ३ ॥

**भाषार्थ**–जिस समय भ्रमरोंका समूह शब्द करता है–उस समय अंगुलीके अग्रभागसे कानोंका आच्छादन करते हैं और जिस समय आपके विरहका दुःख मनमें बढता हैं उस समय सभीरात्रियोंमें पीडाको प्राप्त होते हैं अर्थात् आपके विरहमें भ्रमरोंका शब्द भी नहीं सहा जाता ॥ ३ ॥

**वसति विपिनविताने त्यजति ललितमपि धाम ॥**
**लुठति धरणिशयने बहु विलपति तव नाम ॥ ४ ॥**

पद–वसति क्रि०विपिनविताने ७ त्यजति क्रि०ललितम् २ अपि ऽ धाम २ लुठति क्रि० धरणिशयने ७ बहु २ विलपति क्रि० तव ६ नाम २ ॥ ४ ॥

योजना–ललितम् अपि धाम त्यजति विपिनविताने वसति धरणिशयने लुठति–तव नाम बहु विलपति ॥ ४ ॥

**भाषार्थ**–हे राधाजी वे श्रीकृष्णचंद्रजी आपके वियोगमें जहां बहुत वनका विस्तार है वहां वसते हैं और सुंदर भी अपने स्थानको त्यागते हैं पृथ्वीशय्यापर सोते हैं और वारंवार आपके नामको जपते हैं अर्थात् प्राणप्रिया आपके विना व्यग्र-चित्त है ॥ ४ ॥

**रणति पिकसमुदाये प्रतिदिशमनुयाति ॥ हसति**
**मनुजनिचये निजविरहमपलपति नेति ॥ ५ ॥**

पद-रणति ७ पिकसमुदाये ७ प्रतिदिशम्ऽ अनुयाति क्रि० हसति ७ मनुजनिचये ७ निजविरहम् २ अपलपति क्रि० नऽ इतिऽ ॥ ५ ॥

योजना-पिकसमुदाये रणति सति हे राधे श्रीकृष्णः प्रतिदिशम् अनुयाति मनुजनिचये हसति सति निजविरहं न इति अपलपति॥५॥

**भाषार्थ**-हे राधाजी श्रीकृष्णचंद्रजी जिस समय कोकिलोंका समह गूँजता है उसको तुमारा शब्द जानकर चारों दिशाओंमें घूमते हैं और जब मनुष्योंका समूह हँसता हैं तव आपके वियोगसे पैदा हुए अपने विरहदुःखको ऐसे झिडकते हैं कि-तू मत हो ॥ ५ ॥

**स्फुरति कलरवरावे स्मरति भणितमेव ॥ तव**
**रतिसुखविभवे बहु गणयति सुगुणमतीव ॥ ६ ॥**

पद-स्फुरति ७ कलरवरावे ७ स्मरति क्रि० भणितम् २ एवऽ तव ६ रतिसुखविभवे ७ बहुऽ गणयति क्रि० सुगुणम् २-अतीवऽ ॥६॥

योजना-कलरवरावे स्फुरति सति तव भणितम् एव स्मरति तव रतिसुखविभवे सति अतीव सुगुणं ( तत्सुखं बहु ) गणयति ॥ ६ ॥

**भाषार्थ**-हे राधाजी ! वे श्रीकृष्णचंद्रजी मधुर है शब्द जिनका ऐसे पक्षी जिस समय शब्द करते हैं उस समय आपके मधुर शब्दका स्मरण करते हैं और जब तेरी रतिके सुखका अनुभव होता है तब बडा ही श्रेष्ठ सुख है ऐसे कहकर उस सुखको वारंवार गिनते हैं ॥ ६ ॥

**त्वदभिधशुभदमासं वदति नरि शृणोति ॥ तमपि**
**जपति च सरसं परयुवतिषु न रतिमुपैति ॥७॥**

पद-त्वदभिधशुभदमासं २ वदति ७ नरि ७ शृणोति क्रि० तम् २

अपि॰ जपात क्रि॰ च॰ सरसम् २ परयुवतिषु ७ न॰ रतिम् २ उपैति॰ क्रि ॥ ७ ॥

योजना—नरि त्वदभिधशुभदमासं वदति सति तव शृणोति तव अपि॰ सरसं यथा स्यात् तथा जपति परयुवतिषु रतिं न उपैति॥७॥

**भाषार्थ**—हे राधेजी! वे श्रीकृष्णचंद्रजी शुभके दाता आपके नाम ( राधा वैशाख ) के मासका जब कोई मनुष्य उच्चारण करता है तब बडे प्रेमसे उसको सुनते हैं और उसको बडी प्रीतिसे जपते हैं और आपसे अन्य स्त्रियोंमें सुखको प्राप्त नहीं होते हैं ॥ ७ ॥

**भणति कविजयदेव इति विरहविलसितेन ॥**
**मनसि रसविभवे हरिरुदयतु सुकृतेन ॥ ८ ॥**
**इति श्रीगीतगोविन्दे दशमः प्रबंध ॥ १० ॥**

पद—भणाति ७ कविजयदेवे ७ इति॰ विरहविलसितेन ३ मनसि ७ रसविभवे ७ हरिः १ उदयतु क्रि॰ सुकृतेन ३ ॥ ८ ॥

योजना—विरहविलसितेन कविजयदेवे इति भणति सति रसविभवे सति मनसि हरिः सुकृतेन उदयतु ॥ ८ ॥

**भाषार्थ**—श्रीकृष्णचंद्रजीके विरहविलासके इस प्रकार जयदेवके कथन करनेपर आनंदकीही अधिकता जिसमें ऐसे जयदेवके मनमें पुण्यसे हरिका उदय हो—अर्थात् श्रीकृष्ण चंद्रजी—प्रकट हों ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ दशमः प्रबन्धः ॥ १० ॥

**पूर्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धयस्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः॥ ध्यायं-**

स्त्वामनिशं जपन्नपि तवैवालापमन्त्रावलिं भूयस्त्व-
त्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति ॥ १ ॥

पद—पूर्वं २ यत्र ऽ समं ऽ त्वया ३ रतिपतेः ६ आसादिताः १ सिद्धयः १ तस्मिन् ७ एव ऽ निकुंजमन्मथमहातीर्थे ७ पुनः ऽ माधवः ध्यायन् १ त्वाम् २ अनिशं ऽ जपन् १ अपि ऽ तव ६ एव ऽ आलापमन्त्रावलिं २ भूयः ऽ त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं २ वांछति क्रि० ॥ १ ॥

योजना—यत्र त्वया समं रतिपतेः सिद्धयः आसादिताः तस्मिन् एव निकुञ्जमन्मथमहातीर्थे त्वाम् एव अनिशं ध्यायन् तव एव मन्त्रावलिम् अपि जपन्सन् भूयः त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वांछति ॥ १ ॥

भाषार्थहे राधाजी ! जिस कुंजमें पहिले समयमें तेरे संग कामदेव ( शृंगारस ) की सिद्धिप्राप्त कीथी उसी कामदेवके महातीर्थ कुंजमें फिर माधवजी रातदिन आपका ही ध्यान करते और रातदिन आपकेही वाक्यरूप मंत्रोंके समूहको जपते हुए फिर भी आपके स्तनकलशोंके गाढालिंगनरूप अमृतकी वांछा करते हैं जैसे सिद्धिके अनंतर मोक्षरूप अमृतकी इच्छा होती है ऐसेही श्रीकृष्णचंद्रजी भी कामसिद्धिके अनंतर गाढालिंगनरूप अमृतको चाहते हैं ॥ १ ॥

अथैकादशः प्रबन्धः केदाररागेणैकतालीताले गीयते ११

रतिसुखसारे गतमभिसारे मदनमनोहरवेषम् ।न कुरु
नितम्बिनि गमनविलम्बनमनुसर तं हृदयेशम् ॥ १ ॥
धीरसमीरे यमुनातीरे वसति वने वनमाली ॥ गोपी-
पीनपयोधरमर्दनचञ्चलकरयुगशाली ॥ ध्रु० ॥

पद–रतिसुखसारे ७ गतम् २ अभिसारे ७ मदनमनोहरवेषम् २ नऽ कुरु क्रि० नितम्बिनि १ गमनविलम्बनम् २ अनुसर क्रि० तम् २ हृदयेशम् २ धीरसमीरे ७ यमुनातीरे ७ वसति क्रि० वने ७ वनमाली १ गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली १ ॥ १ ॥

योजना–हे राधे धीरसमीरे यमुनातीरे वने गोपीपीनपयोधरमर्दनचञ्चलकरयुगशाली वनमाली वसति रतिसुखसारे अभिसारे गतम् मदनमनोहरवेषं तं हृदयेशं त्वम् अनुसर हे नितम्बिनि गमनविलम्बनम् न कुरु ॥ १ ॥

**भाषार्थ**–हे श्रीराधे ! धीर है पवन जिसमें ऐसे यमुनाके तीरके वनमें गोपियोंका बडे २ स्तनोंके मर्दन करनेसे चंचल हैं दोनों हाथ जिनके ऐसे वनमाली ( श्रीकृष्णचंद्र ) जी वसते हैं रतिके संगका है अधिक सुख जिसमें ऐसे अभिसार ( संकेतस्थान ) में गये और कामदेवके समान मनोहर है वेष जिनका और जो तेरे हृदयको स्वामी हैं ऐसे उस वनमालीजीके समीप आप चलो और हे नितम्बिनि अर्थात् बडे कटिपश्चाद्भागवाली हे राधे गमनमें विलम्ब मत करो ॥ १ ॥

**नामसमेतं कृतसङ्केतं वादयते मृदु वेणुम् ॥ बहु मनुते ऽतनु ते तनुसङ्गतपवनचलितमपि रेणुम् ॥ २ ॥**

पद–नामसमेतम् २ कृतसंकेतं २ वादयते क्रि० मृदु २ वेणुम् २ बहुऽ मनुते क्रि० अतनुऽ ते ६ तनुसङ्गतपवनचलितम् २ अपिऽ रेणुम् २ ॥ २ ॥

योजना–हे श्रीराधे नामसमेतं कृतसङ्केतं वेणुम् मृदु वादयते ते तनुसङ्गतपवनचलितम् अपि रेणुम् अतनु यथा स्यात्तथा बहु मनुते ॥ २ ॥

भाषार्थ—हे श्रीराधे ! आपके नामसहित संकेतसे कोमल स्वरसे श्रीकृष्णचंद्रजी वंशीको बजाते हैं और तेरे शरीरके संग-की पवनसे चली हुई रेणुकाभी अधिक सन्मान करते हैं ॥ २॥

**पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानम् ॥**
**रचयति शयनं सचकितनयनं पश्यति तव पन्थानम् ३**

पद—पतति ७ पतत्रे ७ विचलति ७ पत्रे शङ्कितभवदुपयानम् २ रचयति क्रि० शयनम् २ सचकितनयनं २ पश्यति क्रि० तव ६ पन्थानम् २ ॥ ३ ॥

योजना—पतत्रे पतति सति, पत्रे विचलसि सति शङ्कितभवदुपयानं तव पन्थानं पश्यति सचकितनयनं यथा स्यात् तथा शयनं रचयति ॥ ३ ॥

भाषार्थ—हे श्रीराधे ! जिस समय पक्षी अन्यवृक्षपर उडकर जाता हैं वा किसी वृक्षका पत्ता गिरता है उस समय तेरे आग-मनकी शंकासे श्रीकृष्णचंद्रजी आपके मार्गकी तरफ देखते हैं और नयनोंको चकित करके शय्याको रचते हैं अथात् आपके शयनार्थ पुत्रपुष्पकी शय्याको रचते हैं ॥ ३ ॥

**मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलोलम् ॥**
**चल सखि कुञ्जं सतिमिरपुञ्जं शालय नीलनिचोलम्**

पद—मुखरम् २ अधीरं २ त्यज क्रि० मंजीरं २ रिपुम् २ इव० केलिसुलोलं २ चल क्रि० सखि १ कुंजं २ सतिमिरपुंजम् २ शीलय क्रि० नीलनिचोलम् २ ॥ ४ ॥

योजना—हे सखि त्वं मुखरं केलिसुलोलं मंजीरं रिपुम् इव त्यज सतिमिरपुंजं कुञ्जं चल नीलनिचोलं शीलय ॥ ४ ॥

**भाषार्थ**–हे सखि ( श्रीराधे ) मुखर ( वाचाल ) और अधीर ( मूर्ख ) और क्रीडामें चंचल नूपुरको शत्रुके समान त्याग दो और अंधकारके समूहसहित जो कुंज उसमें चलो और नीलाम्बरको धारण करो अर्थात् नूपुरको त्याग और नीलवस्त्रको धारण करके अंधकारमें गमन करती हुई आपको कोई न देखेगा ॥ ४ ॥

**उरसि मुरारेरुपहितहारे घन इव तरलबलाके ॥**
**तडिदिव पीते रतिविपरीते राजसि सुकृतविपाके ५॥**

पद्–उरसि ७ मुरारेः ६ उपहितहारे ७ घने ७ इव० तरलबलाके ७ तडित् १ इव० पीते ७ रतिविपरीते ७ राजसि क्रि० सुकृतविपाके ७ ॥ ५ ॥

योजना–हे सखि त्वम् उपहितहारे सुकृतविपाके रतिविपरीते तरलबलाके घने इव मुरारेः उरसि हे पीते ( पीतवर्णे ) त्वं तडित् इव राजसि ॥ ५ ॥

**भाषार्थ**–हे पीतवर्ण( श्रीराधे ) आप स्थित है हार जिसपर चंचल बलाका जिसमें ऐसे घनसदृश और पुण्यके फलरूप श्रीकृष्णचंद्रके वक्षस्थलपर विपरीत रतिके समयमें अर्थात् पुरुषके समान बनकर आप बिजलीके समान शोभाको प्राप्त होयगी ॥ ५ ॥

**विगलितवसनं परिहृतरशनं घटय जघनमपिधानम् ॥**
**किसलयशयने पङ्कजनयने निधिमिव हर्षनिदानम् ६**

पद्–विगलितवसनं २ परिहृतरशनं २ घटय क्रि० जघनं २ अपि-

धानम् २ किसलयशयने ७ पङ्कजनयते ७ निधिम् २ इव ऽ हर्षनिदानम् २ ॥ ६ ॥

योजना-हे राधे किसलयशयने पङ्कजनयने विगलितवसनम् २ परिहृतरशनम् अपिधानं जघनं हर्षनिदानं निधिम् इव त्वं घटय ( आरोपय ) ॥ ६ ॥

भाषार्थ--हे श्रीराधे कमलोंकी शय्यापर शयन करते हुए पुण्डरीकाक्ष ( श्रीकृष्णचंद्रजी ) के ऊपर नहीं है वह जिसमें निकसगयी है रशना (कोंदनी) जिसकी ऐसी उस नग्न जंघाको आरोपण करो ( रख ) और जो रखनेके समय आनंद देनेवाले निधि ( खजाना ) के समान प्रतीत होती है ॥ ६ ॥

हरिरभिमानी रजनिरिदानीमियमपि याति विरामम् ॥
कुरु मम वचनं सत्वररचनं पूरय मधुरिपुकामम्॥ ७ ॥

पद-हरिः १ अभिमानी १ रजनिः १ इदानीम्ऽइयम् अपिऽ याति क्रि० विरामम् २ कुरु क्रि० मम ६ वचनं २ सत्वररचनम् २ पूरय क्रि० मधुरिपुकामम् २ ॥ ७ ॥

योजना--हे श्रीराधे हरिः अभिमानी अस्ति इदानीं रजनिअस्ति इयं ( रजनिः ) अपि विरामं याति सत्वररचनं मम वचनं त्वं कुरु मधुरिपुकामं त्वं पूरय ॥ ७ ॥

भाषार्थ-हे श्रीराधे ! श्रीकृष्णचंद्रजी अभिमानी हैं और अब रात्रि भी है और सोभी बीती जाती है इससे आप शीघ्रमेरे वचनको करो और मधुरिपु ( श्रीकृष्णचंजी ) की कामनाको पूर्ण करो ॥ ६ ॥

श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम् ॥ प्रमु-

दितहृदयं हरिमति सदयं नमत सुकृतकमनीयम् ॥ ८ ॥ इति श्रीगीतगोविन्दे एकादशप्रबंधः ॥ ११ ॥

पद—श्रीजयदेवे ७ कृतहरिसेवे ७ भणति ७ परमरमणीयं २ प्रमुदितहृदयं २ हरिम् २ अतिसदयं २ नमत क्रि० सुकृतकमनीयम् २ ॥

योजना—हे वैष्णवाः—कृतहरिसेवे—प्रमुदितहृदयं यथा स्यात्तथा इदं परमरमणीयं भणति श्रीजयदेवे अतिसदयं सुकृतकमनीयं हरिम् यूयं नमत ॥ ८ ॥

भाषार्थ—हे भक्तजन वैष्णवो ! की है कृष्णकी सेवा जिसने और प्रसन्न होकर हृदयसे वर्णन किया है परम रमणीय(सुंदर) इस गीतको जिसने ऐसे श्रीजयदेव कविपर अत्यंतदयालु और पुण्यके समान रमणीय वा पुण्यसे देखने योग्य जो हरि उसको तुम नमस्कार करो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ एकादशः प्रबन्धः ॥

विकिरति मुहुःश्वासानाशाःपुरो मुहुरीक्षते प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति ॥ रचयति मुहुः शय्यां पर्याकुलं मुहुरीक्षते मदनकदनक्लान्तः कान्ते प्रियस्तव वर्तते ॥ १ ॥

पद—विकिरति क्रि०मुहुःऽ श्वासान् २ आशाः २ पुरःऽ मुहुःऽ ईक्षते क्रि०प्रविशति क्रि०मुहुःऽ कुञ्जं २ गुञ्जन् १ मुहुःऽ बहु २ ताम्यति क्रि०रचयति–मुहुःऽ शय्यां २ पर्याकुलम् २ मुहुःऽ ईक्षते क्रि०मदनकदनक्लांतः १ कांते १ प्रियः १ तव ६ वर्तते क्रि० ॥ १ ॥

योजना—हे कांते तव प्रियः यतः मुहुः श्वासान् विकिरति पुरः आशाः मुहुः ईक्षते— कुञ्जं मुहुःप्रविशति गुंजन्सन् मुहुः बहु ताम्यति

शय्यां मुहुः रचयति पर्याकुलं यथा स्यात्तथा मुहुः ईक्षते अतः मदनकदनक्लान्तः वर्तते ॥ १ ॥

भाषार्थ—हे कोमलांगि श्रीराधे ! जिससे आपके प्यारे श्रीकृष्णचंद्रजी वारंवार ऊर्ध्वश्वासोंकी धारा छोडते हैं और आपने आगेकी दिशाओंको वारंवार देखते हैं अर्थात् व्याकुल होकर कोन दिशासे राधाजी आवेंगी इस आशासे सब दिशाओंको देखते हैं और वहांभी न देखकर बाहिर छिपकर खडा होकर वारंवार कुंजमें प्रवेश करते हैं और क्यों न आई किसने मने कीं वा किसके भयसे न आई ऐसे वारंवार कहते हुए ग्लानिके प्राप्त होते हैं और यह संदेह वृथा है अवश्य आवेगी इस विचारसे वारंवार शय्याको रचते हैं और शय्यापरभी न देखकर अत्यंत व्याकुलसे मेरे अनुराग ( प्रेम ) से अब आवेगी यह समझकर वारंवार देखते हैं इन पूर्वोक्त संपूर्णलक्षणोंसे प्रतीत होता है कि आपके प्यारे कामदेवकी पीडासे दुःखित हैं इससे आपको अपने प्यारेके दुःखोंकी शांति करनी योग्य है ॥ १ ॥

त्वद्वाक्येन समं समग्रमधुना तिग्मांशुरस्तङ्गतो
गोविन्दस्य मनोरथेन च समं प्राप्तं तमः सान्द्रताम् ॥
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे विफलं विलंबनमसौ रम्योऽभिसारक्षणः ॥२॥

पद—त्वद्वाक्येन ३ समंऽ समग्रम् २ अधुनाऽ तिग्मांशुः १ अस्तङ्गतः १ गोविंदस्य ६ मनोरथेन २ चऽ समंऽ प्राप्तं १ तमः १ सांद्र

तास् २ कोकानाम् ६ करुणस्वनेन ३ सदृशी १ दीर्घा १ मदभ्यर्थना १ तत् ५ मुग्धे १ विफलम् १ विलम्बनम् १ असौ १ रम्यः १ अभिसारक्षणः १

योजना—हे मुग्धे ( मूढे ) श्रीराधे त्वद्वाक्येन, समम् अधुना समग्रं यथा स्यात्तथा तिग्मांशुः ( सूर्यः ) अस्तंगतः—च पुनः गोविंदस्य मनोरथेन समं ततः ( अन्धकारः ) सान्द्रतां प्राप्तम् कोकानां करुण स्वनेन सदृशी मदभ्यर्थना दीर्घा अस्ति तत् ( तस्मात् ) विलम्बनं विफलम् अस्ति—असौ अभिसारक्षणः रम्यः वर्तते ॥ २ ॥

**भाषार्थ**—मूर्खिणी श्रीराधे ! अब आपके वाक्योंके संग सूर्य संपूर्ण अस्त हो चुका है अर्थात् आप शोकसे चुप बैठी हो और सूर्य छिप चुका और श्रीकृष्णचंद्रजीके मनोरथों सहित अंधकार सघन होगया अर्थात् जैसे गोविंदके तेरी प्राप्तिके लिये बडे २ मनोरथ हैं ऐसे ही अंधकारभी बढ गया है और कवियोंके करुणशब्दके समान मेरी प्रार्थना दीर्घ ( भारी ) है अर्थात् मैं अत्यंत प्रार्थना कर रही हूं तिससे अब विलंब करना निष्फल है क्योंकि यह अभिसार ( संकेत स्थानमें जाना ) का क्षण बडा रमणीय है अर्थात् गमनके योग्य है ॥ २ ॥

आश्लेषादनुचुम्बनादनुनखोल्लेखादनुस्वान्तजात् प्रोद्बोधादनुसम्भ्रमादनुरतारम्भादनुप्रीतयोः॥ अन्यार्थं गतयोर्भ्रमान्मिलितयोः संभाषणैर्जानतोर्दंपत्योर्निशि को न को न तमसि व्रीडाविमिश्रो रसः ॥ ३ ॥

पद—आश्लेषात् ५ अनुचुंबनात् ५ अनुनखोल्लेखात् ५ अनुस्वान्त-

जात् ५ प्रोद्बोधात् ५ अनुसम् भ्रमात् ५ अनुरतारम्भात् ५ अनु प्रीतयोः६ अन्यार्थं २ गतयोः६ भ्रमात् ५ मिलितयोः६ सभाषणैः३ जानतोः ६ दम्पत्योः ६ निशि ७ कः १ नऽ कः १ नऽ तमसि ७ व्रीडाविमिश्रः २ रसः ॥ ३ ॥

योजना—आश्लेषात् अनुचुम्बनात् अनुनखोल्लेखात् अनुस्वान्तजात् प्रोद्बोधात् अनुसम्भ्रामात् अनुरतारभात् अनुप्रीतयोः अन्यार्थं गतयोः भ्रमात् मिलितयोः संभाषणैः जानतोः दम्पत्योः निशि तमसि व्रीडाविमिश्रः कः कः रसः न भवेत् । अपि तु सर्वोपि व्रीडा-विमिश्रो रसो भवत्येवेत्यर्थः ॥ ३ ॥

भाषार्थ--हे श्रीराधे प्रथम आलिंगन ( स्पर्श ) से, फिर चुंबनसे फिर नखोंके छेदनसे—फिर अपने मनमें पैदा हुए कामदेवके बोधसे फिर वेगसे फिर राति ( मैथुन ) के आरं-भके पीछे परस्पर प्रसन्न हुए, और परपुरुष और पराईस्त्रीके लिये संकेतस्थानमें गये और भ्रमसे अंधकारमें लिये और यह मेरी स्त्री नहीं है यह मेरा पुरुष नहीं है यह संभाषणा ( बोली ) से परस्पर जानते हुए जो स्त्री पुरुष हैं उनको रात्रिके समय, अंधकारमें कोन कोन लज्जासहित शृङ्गार आदि रस नहीं होता अपि तु संपूर्णही रसकी प्राप्ति होती है क्योंकि संभोगका यह क्रम है कि स्पश चुंबन नखछेदन कामदेवका उद्बोध वेग मैथुनका आरंभ प्रीति भावना ( एकता ) ये क्रमसे होते हैं इससे हे श्रीराधे ! आप व्रीडासहित शृंगाररस भोगनेके लिये अवश्य चलो ॥ ३ ॥

सभयचकितं विन्यस्यन्ती दृशं तिमिरे पथि प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीम् ॥कथमपि रहः

प्राप्तामङ्गैरनङ्गतरङ्गिभिः सुमुखि सुभगः पश्यन् त्वामुपैतु कृतार्थताम् ॥ ४ ॥

पद–सभयचकितं २ विन्यस्यन्तीं २ दृशं २ तिमिरे ७ पथि ७ प्रतितरुऽ मुहुःऽ-स्थित्वाऽ मन्दंऽ पदानि २ वितन्वतीं २ कथम्ऽअपिऽ रहःऽ प्राप्ताम् २ अङ्गैः ३ अनङ्गतरङ्गिभिः ३ सुमुखि १ सुभगः १ पश्यन् १ सः १ त्वाम् २ उपैतु क्रि० कृतार्थताम् २ ॥ ४ ॥

योजना–हे सुमुखि–तिमिरे पथि सभयचकितं यथा स्यात्तथा दृशं विन्यस्यतीं प्रतितरु मुहुः स्थित्वा मन्दं यथा स्यात्तथा पदानि वितन्वतीं कथम् अपि रहः प्राप्ताम् अनङ्गतरङ्गिभिः अङ्गैः उपलक्षिताम् त्वां पश्यन् सन् स सुभगः ( श्रीकृष्णः ) कृतार्थताम् उपैतु ( प्राप्नोतु ) ॥ ४ ॥

भाषार्थ–हे सुंदरमुखी श्रीराधे अंधकारसहित मार्गमें भयसे चकित होकर देखती और वृक्ष २ के नीचे वारंवार स्थित होकर मंद २ चरणोंको रखती और भाग्यवश किसी प्रकार अंधकारमें मिली और कामदेवकी तरंगरूप अंगोंसे युक्त ऐसी आपको देखते हुये ये सुभग ( सुंदर वा भाग्यवान् ) श्रीकृष्णचंद्रजी कृतार्थताको प्राप्त हो अर्थात् आप चलकर श्रीकृष्णको कृतार्थ करो ॥ ४ ॥

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षमः ॥ स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनंदनः ॥ ५ ॥

इति श्रीगीतगोविन्दे अभिसारिकावर्णने साकाङ्क्षपुण्डरीकाक्षो नाम पञ्चमस्सर्गः ॥ ५ ॥

पद-राधामुग्धमुखारविंदमधुपः १ त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नम् २ अवनीभारावतारक्षमः १ स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषः १ चिरंऽ कंसध्वंसनधूमकेतुः १ अवतु क्रि० त्वां देवकीनन्दनः १ ॥ ५ ॥

योजना-हे भक्त राधामुग्धमुखारविंदमधुपः त्रैलोक्यमौलिस्थली नेपथ्योचितलीलरत्नम् इव स्थितः अवनीभारावतारक्षमः स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषः कंसध्वंसनधूमकेतुः देवकीनन्दनः त्वां, चिरम् अवतु ॥ ५ ॥

**भाषार्थ**-हे भक्तजनो ! राधाजीके मुखारविंदका भ्रमररूप और त्रिलोकी मुख्य जो स्थल ( वृंदावन ) उसके भौगोंमें उचित जो नीलमणि उसके समान स्थित और पृथ्वीके भार उतारनेमें समर्थ और स्वच्छंद ( स्वाधीन ) जो व्रजसुंदरी ( गोपी ) उनके मनकी प्रसन्नताके लिये प्रदोषरूप क्योंकि रात्रिके सुखरूप प्रदोषमें स्त्रियोंको संतोष होता है और कंसके नाशार्थ अग्निरूप ऐसे देमकीनंदन आपकी चिरकालतक रक्षा करो अर्थात् पापोंको दूर करो ॥ ५ ॥

इति श्रीगीतगोविन्दे पं० मिहिरचंद्रकृतभाषा-
विवृतिसहिते पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ६.

**अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे दृष्ट्वा ॥**
**तच्चरितं गोविन्दे मनसिजमन्दे सखी प्राह ॥ १ ॥**

पद-अथऽताम् २ गंतुम्ऽ अशक्ताम् २ चिरम्ऽअनुरक्ताम् २ लतागृहे ७ दृष्ट्वाऽ तच्चरितं २ गोविन्दे ७ मनसिजमन्दे ७ सखी १ प्राह क्रि० ॥ १ ॥

योजना—अथ (अनंतरे मङ्गले वा) गंतुम् अशक्ताम् चिरम् अनुरक्तां तां लतागृहे दृष्ट्वा मनसिजमन्दे गोविन्दे तच्चरितं सखी माह ॥ १ ॥

भाषार्थ--इसके अनंतर चलनेको असमर्थ और चिरकाल-तक रही है प्रीति जिनकी ऐसी उन राधाजीको लतागृह (कुंज) में देखकर कामदेवपीडित गोविंदजीके प्रति राधाका चरित्र सखी कहती भई अर्थात् वर्णन करती है ॥ १ ॥

अथ द्वादशः प्रबंधो गुणकरीरागेण रूपकताले गीयते

२ पश्यति दिशि रहसि भवन्तम् ॥ त्वदधरमधुर-मधूनि पिबन्तम् ॥ १ ॥ नाथ हरे जय नाथ हरे सीदति राधावासगृहे ॥ ध्रु० ॥

पद—पश्यति क्रि०दिशि ७ दिशि ७ रहसि ७ भवन्त २ त्वत् ५ अधरमधुरमधूनि २ पिबन्तम् २ नाथ १ हरे १ जय क्रि०नाथ१ हर १ सीदति क्रि० राधा १ वासगृहे ७ ॥ १ ॥

योजना—हे नाथ हे हरे त्वं जय हे नाथ हे हरे राधा वासगृहे त्वत् (त्वत्तः) सीदति अधरमधुरमधूनि पिबन्तं भवन्तं रहसि दिशि दिशि पश्यति ॥ १ ॥

भाषार्थ--हे नाथ हे हरे आपकी जय हो और हे नाथ हे हरे वे राधाजी वासगृह (संकेतकी कुंज) में आपके लिये दुःखी है और अधरके समान मीठे मधु (सहत) का पीतेहुये आपको एकांतमें बैठी हुई चारों दिशाओंमें देखती है ॥ १ ॥

त्वदभिसरणरभसेन वलन्ती ॥ पतति पदानि किय-न्ति चलन्ती ॥ २ ॥

पद--त्वद्बिसरणरभसेन ३ वलन्ती १ पतति क्रि०पदानि २ कियन्ती २ चलन्ती १ ॥ २ ॥

योजना--त्वदभिसरणरभसेन वलन्ती कियनति पदानि चलन्ती सा राधा पतति ॥ २ ॥

**भाषार्थ**--हे श्रीकृष्णचंद्रजी आपके अभिसरण ( संकेत वथान ) में वेगसे सन्मुख होती और कितनेक पदोंको रखकर चलती हुई वे राधाजी गिरती है अर्थात् विरहसे चलनेको असमर्थ है ॥ २ ॥

**विहितविशदविसकिसलयवलया ॥ जीवति परमिह तव रतिकलया ॥ ३ ॥**

पद—विहितविशदबिसकिसलयवलया १ जीवति क्रि० परम्ऽ इहऽ तव ६ रतिकलया ३ ॥ ३ ॥

योजना—विहितविशदबिसकिसलयवलया सा तव रतिकलया इह परं जीवति ॥ ३ ॥

**भाषार्थ**—किये हैं निर्मल बिसोंके अंकुरोंके कंकण जिसने ऐसी वे राधाजी केवल आपके संग रतिकी चिंतासे ही इस समयमें जीती है अर्थात् उसके जीवनहेतु आपही हैं ॥ ३ ॥

**मुहुरवलोकितमण्डनलीला ॥ मधुरिपुरहमिति भवनशीला ॥ ४ ॥**

पद—मुहुःऽ अवलोकितमण्डनलीला १ मधुरिपुः १ अहम् १ इति भावनशीला १ ॥ ४ ॥

योजना—मुहः अवलोकितमण्डनलीला अहं मधुरिपुः अस्मि इति भावनशीला सा जीवतीति पूर्वपदेन अन्वयः ॥ ४ ॥

**भाषार्थ**—श्रीकृष्णचंद्रजीके विना वृथा हैं इति बुद्धिसे

वारंवार देखे हैं भूषण जिसने और मैंही कृष्ण हूं ऐसी भावना ( ध्यान ) में है स्वभाव जिसका ऐसी वे राधाजी केवल आपकी क्रीडाओंकी चिंतासे जीती है ॥ ४ ॥

**त्वरितमुपैति न कथमभिसारम् ॥ हरिरिति वदति सखीमनुवारम् ॥ ५ ॥**

पद्–त्वरितम् २ उपैति क्रि० नऽकथमुऽअभिसारम् २ हरिः १ इतिऽवदति क्रि० सखीम् २ अनुवारमुऽ ॥ ५ ॥

योजना–हरिः अभिसारं त्वरितं कथं न उपैति इति सखीम् अनुवारं वदति ॥ ५ ॥

भाषार्थ–हरि ( श्रीकृष्णचंद्रजी ) संकेतस्थलमें शीघ्र क्यों नहीं आते यह वारंवार सखीको वे राधाजी कहती है ॥ ५ ॥

**श्लिष्यति चुम्बति जलधरकल्पम् ॥ हरिरुपगत इति तिमिरमनल्पम् ॥ ६ ॥**

पद्–श्लिष्यति क्रि०चुम्बति क्रि०जलधरकल्पम् २ हरिः १उपगतः १ इतिऽ तिमिरम् २ अनल्पम् २ ॥ ६ ॥

योजना–सा हरिः उपगत इति बुद्ध्या अनल्पं जलधरकल्पं तिमिरं श्लिष्यति चुम्बति ॥ ६ ॥

भाषार्थ–वे राधाजी–हरि आये इस बुद्धिसे अत्यंत और मेघकी तुल्य जो अंधकार है उसका आलिंगन ( स्पर्श ) और चुंबन करती है अर्थात् स्निग्ध और नील अंधकारको भी मदके मोहसे श्रीकृष्णचंद्रही समझती है ॥ ६ ॥

**भवति विलम्बिनि विगलितलज्जा ॥ विलपति रोदिति वासकसज्जा ॥ ७ ॥**

पद—भवति ७ विलम्बिनि ७ विगलितलज्जा १ विलपति क्रि० रोदिति क्रि०वासकसज्जा १ ॥ ७ ॥

योजना—भवति विलंबिनि सति वासकसज्जा विगलितलज्जा सा राधा विलपति रोदिति ॥ ७ ॥

**भावार्थ**—आप जब आनेमें विलम्ब करते हो तब अपनी कुटीको सजाकर और लज्जाको त्यागकर विलाप करती है और रोती है ॥ ७ ॥

**श्रीजयदेवकवेरिदमुदितम् ॥ रसिकजनं तनुता-मातिमुदितम् ॥ ८ ॥**

**इति श्रीगीतगोविन्दे द्वादशः प्रबन्धः ॥ १२ ॥**

पद—श्रीजयदेवकवेः ६ इदम् १ उदितम् १ रसिकजनं २ तनुताम् क्रि—अतिमुदितम् २ ॥ ८ ॥

योजना—श्रीजयदेवकवेः उदितम् इदं गीतं रसिकजनम् अतिमुदितम् तनुताम् ( करोतु ) ॥ ८ ॥

**भावार्थ**—श्रीजयदेवकविका कहा यह गीत रसिकजनोंको अत्यंत आनंदसे युक्त करो ॥ ८ ॥

इति श्रीगीतगोविन्दे द्वादशः प्रबन्धः ॥ १२ ॥

**विपुलपुलकपालिः स्फीतसीत्कारमन्तर्जनितजडिम-काकुव्याकुलं व्याहरन्ती॥ तव कितव विधायामन्दक-न्दर्पचिन्तां रसजलनिधिमग्ना ध्यानलग्ना मृगाक्षी १॥**

पद—विपुलपुलकपालिः १ स्फीतसीत्कारम् २ अन्तर्जनितजडिम२ काकुव्याकुलम् २ व्याहरन्ती १ तव ६ कितव १ विधायऽअमन्द-कन्दर्पचिन्ताम् २ रसजलनिधिमग्ना १ ध्यानलग्ना १ मृगाक्षी१॥१॥

योजना-हे श्रीकृष्ण हे कितव ( धूर्त ) विपुलपुलकपालिः स्फीतसीत्कारम् अन्तर्जनितजडिम यथा स्यात्तथा काकुव्याकुलं व्याहरन्ती ध्यानलग्ना सा मृगाक्षी राधा अमन्दकन्दर्पचिन्तया विधाय तव रसजलनिधिमग्ना बभूव इत्यध्याहारः ॥ १ ॥

भाषार्थ-हे श्रीकृष्ण! बडी २ हैं रोमांचोंकी पंक्ति जिसकी और बढेहुए सीत्कार शब्दको और अंतःकरणमें पैदा हुई जडता जैसे हों तैसे काकुध्वनिसे व्याकुलता जैसे हो तैसे कहती और ध्यानसे आपकेही चित्तमें लगीहुई वे मृगाक्षी ( मृगनेत्रा ) आपके ही शृंगाररसमें डूबी हुयी है अर्थात् ध्यानमें स्तनोंका स्पर्श अधरपान नीविका मोचन करते हुए आपको देखकर छोड २ नहीं २ मत २ इत्यादि निषेधके वचनोंको कहती हुई आपमेंही तत्पर ( आसक्त ) हो रही है ॥ १ ॥

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि प्राप्तं
त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति ॥
इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्या-
सक्तापि विना त्वया वरतनुर्नैषा निशां नेष्यति॥२॥

पद-अङ्गेषु ७ आभरणं २ करोति क्रि० बहुशःऽपत्रे ७ अपिऽ-संचारिणि ७ प्राप्तम् २ त्वां २ परिशङ्कते क्रि० वितनुते क्रि० शय्याम् २ चिरंऽध्यायति क्रि० इतिऽआकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्ता १ अपिऽ विनाऽ त्वया ३ वरतनुः १ नऽएषा १ निशाम् २ नेष्यति क्रि० ॥ २ ॥

योजना-हे श्रीकृष्ण एषा वरतनुः बहुशः अङ्गेषु आभरणं करोति पत्रे अपि संचारिणी सति त्वां प्राप्तं परिशङ्कते शय्यां वितनुते

चिरं ध्यायाति इति, पूर्वोक्तप्रकारेण आकल्पविकल्पतल्परचना-सङ्कल्पलीलाशतव्यासक्ता अपि अति सा निशां नेष्यति ॥ २ ॥

भाषार्थ—हे श्रीकृष्णचंद्रजी यह मेरे मनमें बैठी राधाजी बहुतवार अपने अंगोमें आभरणों ( भूषणों ) को करती हैं अथात् संगमका आकल्प ( सामग्री ) रचती हैं और पक्षी आदिसे पत्रोंके चलनेपर भी प्राप्त हुये आपकी शंका ( विकल्प ) को करती है और आपको आया हुआ जानकर शय्याको बिछाती है अर्थात् तल्परचना करती है और चिरकालतक आपक ध्यानकी रचना करती है और कृष्णके संगममें मैं यह करूंगी इस प्रकार सैंकडों संकल्पकी लीला करती हैं ऐसे आकल्प विकल्प तल्प रचना संकल्प लीलाशत आदिमें लगी हुई भी यह सुंदरांगी ( श्रीराधा ) रात्रिको व्यतीत न करेगी अर्थात् सूर्योदयसे पूर्व ही मर जायगी इससे इसी समय आपको चलना योग्य है ॥ २ ॥

किं विश्राम्यासि कृष्णभोगिभवनेभाण्डीरभूमीरुहि
भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दस्पदम् ॥
राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो गोवि-
न्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः॥ ३॥

इतिश्रीकविराजश्रीजयदेवकृते गीतगोविंदे महाकाव्ये वासकसज्जावर्णने सोत्कण्ठवैकुण्ठो नाम षष्ठः सर्गः॥ ६॥

पद--किम् २ विश्राम्यसि क्रि० कृष्णभोगिभवने ७ भाण्डीरभूमीरुहि ७ भ्रातः १ यासि क्रि० नऽ दृष्टिगोचरम् २ इतः ५ सानन्दनन्दास्पदम् २ राधायाः ६ वचनम् २ तत् २ अध्वगमुखात् ५ नदान्तिके ७ गोपतः ५ गोविन्दस्य ६ जयन्ति क्रि० सायम्ऽअतिथिप्राशस्त्यगर्भाः १ गिरः ॥ १ ॥ ३ ॥

योजना--हे भ्रातः ( पथिक ) भाण्डीरभूमीरुहि कृष्णभोगिभवने किं विश्राम्यसि इतः दृष्टिगोचरं सानन्दनन्दास्पदं यासि अध्वगमुखात् निःसृतं तत् राधायाः वचनं नन्दान्तिके गोपतः गोविन्दस्य सायम् अतिथिप्राशस्त्यगर्भाः गिरः जयन्ति ॥ ३ ॥

**भाषार्थ**--हे भाई पथिक भांडीर वटकी भूमिके कृष्णसर्पके वा भोगी श्रीकृष्णके भवनमें क्यों विश्राम करता है यहांसे संपूर्ण ऋद्धिवाले उस दीखते हुए नंदके घरपर चला जाय पथिकके मुखसे सुने उस श्रीराधाजीके पूर्वोक्तवचनको नंदके समीप छिपातेहुए गोविन्दजीकी जो उस समयमें अतिथिकी प्रशंसाकी वाणी हैं उनकी जय हो अर्थात् अतिथिने जब यह कहा कि मुझे राधाने भांडीर वटमें नंदके यहां टिकनेका उत्तम स्थान बताया है और भांडीर वटमें कृष्णभोगी (कालासर्प) का वास बताया है उस समय उक्त कथनके छिपानेके लिये कि पिताजीके समीप हमारी कली न खुले इस लिये अतिथिकी प्रशंसा करने लगे कि आइये महाराज बडा अनुग्रह किया ॥ ३ ॥

इति श्रीकविराजश्रीजयदेवकृतेगीतगोविंदे पं० मिहिरचन्द्रकृतभाषाविवृतिसहिते महाकाव्ये वासकसज्जावर्णने सोत्कण्ठवैकुण्ठो नाम षष्ठः सर्गः ॥ ६ ॥

## सप्तम सर्गः ॥ ७ ॥

**अत्रान्तरे च कुलटाकुलवर्त्मपातसञ्जातपाक इव स्फुटलाञ्छनश्रीः॥ वृन्दावनान्तरमदीपयदंशुजालैर्दि क्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १ ॥**

पद–अत्रऽ अन्तरे ७ चऽ कुलटाकुलवर्त्मपातसंजातपातकः १ इवऽ स्फुटलञ्छनश्रीः १ वृन्दावनान्तरम् २ अदीपयत् क्रि० अंशुजालैः ३ दिक्सुन्दरीवदनचन्दनबिन्दुः १ इन्दुः १ ॥ १ ॥

योजना–अत्रान्तरे कुलटाकुलवर्त्मपातसजातपातकः इव स्फुट॰ लाञ्छनश्रीः दिक्सुन्दरीवदनचन्दनबिन्दुः इन्दुः अंशुजालैः वृन्दाव- नान्तरम् अदीपयत् ॥ १ ॥

**भाषार्थ**–कुलटा ( व्यभिचारिणी ) जो कृष्णचंजीकी अभिसारिका उनके समूहने रोका जो संकेतमार्ग इससे पैदा हुये पातकके समान और प्रकट है लांछन ( कलंक ) की श्री जिसकी दिशारूप जो सुंदरी ( नायिका ) उनके मुखारविंदके चंदनतिलकतुल्य ऐसा चंद्रमा वृंदावनके अंतर ( मध्य प्रदेश ) को प्रकाशित करता भया अर्थात् चंद्रोदय होगया ॥ १ ॥

**प्रसरति शशधरबिंबे विहितविलंबे च माधवे मधुरा॥ विरचितविविधविलापं सा परितापं चकारोच्चैः॥२॥**

पद–प्रसरति ७ शशधरबिंम्बे ७ विहितविलंबे ७ चऽ माधवे ७ मधुरा १ विरचितविविधविलापम् २ सा १ परितापम् २ चकार क्रि० उच्चैःऽ ॥ २ ॥

योजना–मधुरा सा राधा शशधरबिंबे प्रसरति सति च पुनः माधवे विहितविलम्बे सति विरचितविविधविलापम् उच्चैः परितापं चकार कृतवती ॥ २ ॥

**भाषार्थ**–जिस समय चंद्रमाका बिंब ऊपरको चढा और

श्रीकृष्णचंद्रजीने आनेमें विलंब किया उस समय वे राधाजी अनेक प्रकारके विलाप करके अत्यंत दुःख मानती भई अर्थात् दुःखसे विलाप करने लगी ॥ २ ॥

अथ त्रयोदशः प्रबन्धो गौडमालवरागेण प्रतिमण्ठताले गीयते ॥ १३ ॥

कथितसमयेऽपि हरिरहह न ययौ वनम् ॥ मम विफलमेतदनुरूपमपि यौवनम् ॥ १ ॥ यामि हे कमिह शरणं सखीजनवचनवञ्चिता ॥ ध्रु० ॥

पद—कथितसमये ७ अपिऽ हरिः१ अहहऽ नऽ ययौ क्रि० वनम् २ मम ६ विफलम् २ एतत् १ अनुरूपम् १ अपिऽ यौवनम् २ यामि क्रि० हेऽ कम् २ इहऽ शरणम् २ सखीजनवचनवञ्चिता १ ॥ १ ॥

योजना—हे मनः सखीजनवचनवञ्चिता अहम् इह ( निर्जनवने ) कं शरणं यामि अहह ( इति खेदे ) कथितसमये अपि हरिः वनं न ययौ अनुरूपम् अपि एतत् मम यौवनं विफलं ( वृथा ) अस्ति १॥

भाषार्थ—हे मन सखीजनोंके वंचित ( ठगी ) मैं किसकी शरण जाऊं अर्थात् क (जल) की शरण जाती हूं ( डूबती हूं ) क्योंकि श्रीकृष्णचंद्रजी अपने कहे हुए समयमें वनमें न आया और श्रीकृष्णके समागम विना अनुरूप ( योग्य ) भी यह यौवन निष्फल है अर्थात् वृथा है ॥ १ ॥

यदनुगमनाय निशि गहनमपि शीलितम् ॥ तेन मम हृदयमिदमसमशरकीलितम् ॥ २ ॥

पद—यदनुगमनाय ४ निशि ७ गहनम् १ अपिऽ शीलितम् १ तेन ३ मम ६ हृदयम् १ असमशरकीलितम् १ ॥ २ ॥

योजना--यदनुगमनाय मया गहनम् अपि वनं निशि शीलितं तेन इदं मम हृदयम् असमशरकीलितम् कृतम् इति शेषः ॥ २ ॥

भाषार्थ--जिस श्रीकृष्णचंद्रजीको रतिक्रीडासे प्रसन्न करनेके लिये रात्रिमें निर्जन वनमें भी बसी उस श्रीकृष्णने यह मेरा हृदय कामदेवसे बाँध दिया ॥ २ ॥

**मम मरणमेव वरमतिवितथकेतना ॥ किमिति**
**विषहामि विरहानलमचेतना ॥ ३ ॥**

पद--मम ६ मरणम् १ एव ऽ वरम् १ अतिवितथकेतना १ किम् २ इति ऽ विषहामि क्रि० विरहानलम् २ अचेतना १ ॥ ३ ॥

योजना--अतिवितथकेतना अचेतना अहं विरहानलं किम् इति विषहामि अतः मम मरणम् एव वरम् अस्ति ॥ ३ ॥

भाषार्थ--इस वनमें अचेतन ( ज्ञानरहित ) और अत्यंत निष्फल है शरीर जिसका ऐसी मैं इस विरहकी अग्निको क्यों सहों इससे मेरा मरनाही श्रेष्ठ है क्योंकि जीनेमें श्रीकृष्णचंद्रजीके सौंदर्यका भोग नहीं है और मरनेपर विरहाग्नि न होगी। ३॥

**मामहह विधुरयति मधुरमधुयामिनी ॥ काऽपि**
**हरिमनुभवति कृतसुकृतकामिनी ॥ ४ ॥**

पद--माम् २ अहह ऽ विधुरयति क्रि० मधुरमधुयामिनी १ का १ अपि ऽ हरिम् २ अनुभवति क्रि० कृतसुकृतकामिनी १ ॥ ४ ॥

योजना--अहह इति खेदे मधुरमधुयामिनी मां विधुरयति का अपि सुकृतकामिनी हरिम् अनुभवति ॥ ४ ॥

भाषार्थ--खेदकी बात है कि इस मनोहर वसंतकी रात्रिसे प्रतीत होता है कि किया है पुण्य जिसने ऐसी कोई कामिनी ( गोपी ) कृष्णको भोग रही है और मैं दुःखित हूं ॥ ४ ॥

**अहह कलयामि वलयादिमणिभूषणम् ॥ हरिवि-
रहदहनवहनेन बहुदूषणम् ॥ ५ ॥**

पद--अहहऽ कलयामि क्रि० वलयादिमणिभूषणम् २ हरिविरह-दहनवहनेन ३ बहुदूषणम् २ ॥ ५ ॥

योजना--अहह इति खेदे अहं वलयादिमणिभूषणं हरिविरहदहन-वहनेन बहुदूषणम् कलयामि ॥ ५ ॥

**भाषार्थ**--खेदकी बात है कि मोतियोंसे जटित कंकण आदि भूषणोंको श्रीकृष्णचन्द्रजीके विरहकी अग्निसे अत्यंत दूषित मानती हूं अर्थात् प्यारेके बिना ये सब भूषण वृथा हैं ॥ ५ ॥

**कुसुमसुकुमारतनुमतनुशरलीलया ॥ स्रगपि
हृदि हन्ति मामतिविषमशीलया ॥ ६ ॥**

पद--कुसुमसुकुमारतनुम् २ अतनुशरलीलया ३ स्रक् १ अपिऽ हृदि ७ हन्ति क्रि० माम् २ अतिविषमशीलया ३ ॥ ६ ॥

योजना--अतिविषमशीलया 'अतनुशरलीलया कुसुमसुकुमारतनुं मां स्रक् अपि हृदि हन्ति ॥ ६ ॥

**भाषार्थ**--अत्यंत विषम ( सहनेके अयोग्य ) जो काम-देवके बाणोंकी लीला उससे माला भी पुष्पोंके समान कोम-लांगी मुझको हृदयमें दग्ध करती है अर्थात् माला भी हृदयमें बाणोंके समान प्रतीत होती है ॥ ६ ॥

**अहमिव निवसामि न गणितवनवेतसा ॥ स्मरति
मधुसूदनो मामपि न चेतसा ॥ ७ ॥**

पद--अहम् १ इहऽ निवसामि क्रि० नऽ गणितवनवेतसा १ स्मरति क्रि० मधुसूदनः १ माम् २ अपिऽ नऽ चेतसा ३ ॥ ७ ॥

योजना-न गणितवनवेतसा अहं इह ( वने ) निवसामि मधुसूदनः चेतसाऽपि अपि मां न स्मरति ॥ ७ ॥

**भाषार्थ**-वन २ में कृष्णको ढूंढती हुयी मैं बेतके वृक्षोंको न गिनकर इस गहन वनमें वासकर रही हूं और मधुसूदन ( श्रीकृष्णचंद्रजी ) मुझे मनसे भी स्मरण नहीं करते यह आश्चर्य है ॥ ७ ॥

**हरिचरणशरणजयदेवकविभारती ॥ वसतु हृदि युवतिरिव कोमलकलावती ॥ ८ ॥**

**इति श्रीगीतगोविन्दे त्रयोदशः प्रबंधः ॥ १३ ॥**

पद-हरिचरणशरणजयदेवकविभारती १ वसतु क्रि० हृदि ७ युवतिः १ इवऽ कोमलकलावती १ ॥ ८ ॥

योजना-कोमलकलावती हरिचरणशरणजयदेवकविभारती युवतीः इव हृदि वसतु ॥ ८ ॥

**भाषार्थ**--कोमल है वर्ण जिसमें ऐसी कवितासे युक्त हरिके चरण हैं शरण ( रक्षक ) जिसके ऐसे जयदेवकविकी यह गीतरूप सरस्वती ( वाणी ) इस प्रकार भक्तोंके हृदयमें वसो जैसे नायकके हृदयमें कोमलांगी चौसठकलासे युक्त युवति( नायिका) वसती है ॥ ८ ॥

इति श्रीगीतगोविंदभाषाविवृतौ त्रयोदशः प्रबंधः ॥ १३ ॥

**तत्किं कामपि कामिनीमभिसृतः किंवा कलाकेलिभिर्बद्धो बन्धुभिरन्धकारिणि वनोपान्ते किमु भ्राम्यति।**

कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ १ ॥

पद—ततऽ किम् १ काम् २ अपिऽ कामिनीम् २ अभिसृतः १ किं १ वाऽ कलाकेलिभिः ३ बद्धः १ बन्धुभिः ३ अन्धकारिणि ७ वनोपान्ते ७ किम् ऽ उऽ भ्राम्यति क्रि० कान्तः १ क्लान्तमनाः १ मनाक्ऽ अपिऽ पथि ७ प्रस्थातुम्ऽ एवऽ अक्षमः १ सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जे ७ अपिऽ यत्ऽ नऽ आगतः १ ॥ १ ॥

योजना—कान्तः ( श्रीकृष्णः ) यत् ( यस्मात् ) सङ्केतीकृतमञ्जु-वञ्जुललताकुञ्जे अपि न आगतः तत् ( तस्मात् ) किं काम् अपि कामिनीम् अभिसृतः वा किं बन्धुभिः कलाकेलिभिः बद्धः उ (वितर्के) किम् अन्धकारिणि वनोपान्ते भ्राम्यति किं क्लान्तमनाः पथि मनाक् अपि प्रस्थातुम् ( आगन्तुम् ) अक्षमः ( असमर्थः ) अस्ति ॥ १ ॥

भाषार्थ—श्रीकृष्णचंद्रजी जिससे संकेत किये मनोहर वेतकी लताकुंजमें नहीं आये तिससे क्या किसी कामिनीके सन्मुख तो नहीं चले गये अथवा क्या बंधु ( मित्र ) ओंने हँसीकी क्रीडामें तो न रोक लिये हों अथवा अंधकारवाले वनमें तो न भ्रमते हों वा मेरे लिये व्याकुल अंतःकरण होकर मार्गमें किंचित् भी चलनेको असमर्थ है अर्थात् प्रतीत नहीं होसकता कि संकेत करके क्यों न आये ॥ १ ॥

अथागतां माधवमन्तरेण सखीमियं वीक्ष्य विषादमूकाम् ।
विशङ्कमाना रमितं कयाऽपि जनार्दनं दृष्टवदेतदाह ॥ २ ॥

पद—अथऽ आगताम् २ माधवम् २ अन्तरेणऽ सखीम् २ इयम् १ वीक्ष्यऽ विषादमूकाम् २ विशङ्कमाना १ रमितम् २ कया ३ अपि जनार्दनं २ दृष्टवत्ऽ एतत् २ आह क्रि० ॥ २ ॥

योजना—अथ ( अनन्तर ) इयं (राधा) माधवम् अन्तरेण आगतां विषादमूकां सखीं वीक्ष्य जनार्दनं कया अपि सह रमितं विशंकमाना सती दृष्टवत् एतत् आह ॥ २ ॥

**भाषार्थ**—इसके अनंतर माधवके विना आई हुई सखीको दुःखसे मूक ( चुपकी ) देखकर किसी गोपीके संग जनार्दनके रमणकी शंका करती हुई देखे की तुल्य जनार्दनको यह राधाजी इस वचनको कहने लगी अथवा कामिनीसहित कृष्णको देख कर यह वचन बोली ॥ २ ॥

अथ चतुर्दशः प्रबंधो वसंतरागेण एकतालीताले गीयते ॥ १४ ॥

**स्मरसमरोचितविरचितवेषा ॥ गलितकुसुमदलविलुलितकेशा ॥ १ ॥ कापि चपला मधुरिपुणा विलसति युवतिरधिकगुणा ॥ ध्रु० ॥**

पद—स्मरसमरोचितविरचितवेषा १ गलितकुसुमदलविलुलितकेशा १ का १ अपि ऽ चपला १ मधुरिपुणा ३ विलसति क्रि० युवतिः १ अधिकगुणा १ ॥ १ ॥

योजना—स्मरसमरोचितविरचितवेषा गलितकुसुमदलविलुलितकेशा अधिकगुणा चपला का अपि युवतिः मधुरिपुणा सह विलसति ( क्रीडति ) ॥ १ ॥

**भाषार्थ**—कामदेवके संग युद्धके योग्य धारण किये हैं भूषण आदि जिसने और गिरते हैं पुष्प जिनमेंसे ऐसे अस्तव्यस्त हैं केश जिसके ऐसी अत्यंत सुंदरता आदि गुणोंसे युक्त

कोई चपल युवति ( कामिनी ) श्रीकृष्णजीके संग क्रीडा करती है ॥ १ ॥

**हरिपरिरम्भणवलितविकारा ॥ कुचकलशोपरि तरलितहारा ॥ २ ॥**

पद–हरिपरिरम्भणवलितविकारा १ कुचकलशोपरिऽ तरलितहारा १ ॥ २ ॥

योजना–हरिपरिरम्भणवलितविकारा कुचकलशोपरि तरलितहारा का अपि युवतिः मधुरिपुणा विलसति इति पूर्वोक्तध्रुवपदेनान्वयः ॥ २ ॥

**भाषार्थ**–कृष्णके आलिंगनसे पृथक् २ दीखता है कामदेवका भाव जिसका और कलशतुल्य कुचाओंपर चंचल है हार जिसके ऐसी कोई युवति श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ २ ॥

**विचलदलकललिताननचन्द्रा ॥ तदधरपानरभसकृततन्द्रा ॥ ३ ॥**

पद–विचलदलकललिताननचन्द्रा १ तदधरपानरभसकृततन्द्रा १॥

योजना–पदद्वयस्य ध्रुवपदेन पूर्ववत् ॥ ३ ॥

**भाषार्थ**–काँपते हुए स्वर्णके तुल्य केशोंसे मनोहर है मुखचंद्र जिसका और श्रीकृष्णके अधर पीनेसे शीघ्र आई है तन्द्रा जिसको ऐसी कोई युवति श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ ३ ॥

**चञ्चलकुण्डलदलितकपोला ॥ मुखरितरशनजघनगतिलोला ॥ ४ ॥**

पद—चञ्चलकुण्डलललितकपोला १ मुखरितरशनजघनगतिलोला ४ ॥

योजना—पदद्वयस्य ध्रुवपदेन पूर्ववत् ॥ ४ ॥

**भाषार्थ**—चंचल कुंडलोंसे घिसे हैं कपोल जिसके और शब्द करती रशना ( कोंदनी ) वाली जंघाओंके गमनसे चंचल ऐसी कोई युवति श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ ४ ॥

**दयितविलोकितलज्जितहसिता ॥ बहुविधकूजित-रतिरसरसिता ॥ ५ ॥**

पद—दयितविलोकितलज्जितहसिता १ बहुविधकूजितरतिरस-रसिता १ ॥ ५ ॥

योजना—ध्रुवपदेन पूर्ववत् ॥ ५ ॥

**भाषार्थ**—कृष्णको देखकर लज्जासे हँसती और अनेक प्रकारके हैं मयूर आदिके शब्द जिसमें ऐसा जो रतिक्रीडाका रस उससे प्रसन्न कोई कामिनी श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ ५ ॥

**विपुलपुलकपृथुवेपथुभङ्गा ॥ श्वसितनिमीलित-विकसदनङ्गा ॥ ६ ॥**

पद—विपुलपुलकपृथुवेपथुभङ्गा १ श्वसितनिमीलितविकसदनङ्गा १ । ६

योजना—पदद्वयस्य ध्रुवपदेन पूर्ववत् ॥ ६ ॥

**भाषार्थ**—अधिक हैं रोमांच जिसके और बडा है कंप जिसको श्वास और नेत्रोंके मोचनेसे प्रकट हुआ है वीर्यरूप कामदेव जिसको ऐसी कोई कामिनी श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ ६ ॥

**श्रमजलकणभरसुभगशरीरा ॥ परिपतितोरसि रतिरणधीरा ॥ ७ ॥**

पद्—श्रमजलकणभरसुभगशरीरा १ परिपतिता १ उरसि ७ रतिरणधीरा १ ॥ ७ ॥

योजना—श्रमजलकणभरसुभगशरीरा उरसि परिपतिता रतिरणधीरा का अपि युवतिः मधुरिपुणा क्रीडति इति ध्रुवपदेन संबन्धः ॥ ७ ॥

**भाषार्थ**—परिश्रमके जलके कणकोंके भारसे सुंदर है शरीर जिसका—और श्रीकृष्णचंद्रजीकी छातीपर स्थित और रतिरूपसंग्राममें धीर—कोई युवति श्रीकृष्णचंद्रजीके संग क्रीडा करती है ॥ ७ ॥

**श्रीजयदेवभणितहरिरमितम् ॥ कलिकलुषं जनयतु परिशमितम् ॥ ८ ॥**

**इति श्रीगीतगोविन्दे चतुर्दशः प्रबन्धः ॥ १४ ॥**

पद्—श्रीजयदेवभणितहरिरमितम् १ कलिकलुषम् २ जनयतु क्रि० परिशमितम् २ ॥ ८ ॥

योजना—श्रीजयदेवभणितहरिरमितम् कलिकलुषम् परिशमितम् जनयतु ॥ ८ ॥

**भाषार्थ**—श्रीजयदेवका कहा यह हरि ( श्रीकृष्णचंद्रजी ) का रमण ( क्रीडा ) श्रोता और वक्ताओंके जो कलियुगके पाप उनको नष्ट करो ॥ ८ ॥

इति गीतगोविन्दभाषाविवृतौ चतुर्दशः प्रबन्धः ॥ १४ ॥

**विरहपाण्डुमुरारिमुखाम्बुजद्युतिरयं तिरयन्नपि**

**वेदनाम् । विधुरतीव तनोति मनोभुवः सुहृदये हृदये मदनव्यथाम् ॥ १ ॥**

पद-विरहपाण्डुमुरारिमुखाम्बुजद्युतिः १ अयम् १ तिरयन् १ अपिऽ वेदनाम् १ विधुः २ अतीवऽ तनोति क्रि० मनोभुवः ६ सुहृत् १ अयेऽ हृदये ७ मदनव्यथाम् २ ॥ १ ॥

योजना-अये ( इति कोमलसम्बोधने हे सखि) विरहपाण्डुमुरारिमुखाम्बुजद्युतिः-मनोभुवः सुहृत् अयं विधुः वेदनां तिरयन् (आच्छादयन् ) अपि मम हृदये अतीव मदनव्यथां तनोति ॥ १ ॥

**भाषार्थ**-अये सखि (यहां अये यह कोमलसंबोधन) है मेरे विरहसे पीला जो श्रीकृष्णचंद्रजीका मुखारविन्द उसके समान है कांति [ अल्पप्रकाश ] जिसका और कामदेवका मित्र यह चंद्रमा दुःखका आच्छादान ( ढकना ) करता हुआ भी मेरे हृदयमें अत्यंत कामदेवकी पीडाको करता है ॥ १ ॥

## अथ पञ्चदशप्रबन्धो गुर्जररागेण एकतालीताले गीयते ॥ १५ ॥

**समुदितमदने रमणीवदने चुम्बनवलिताधरे ॥ मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे ॥१॥ रमते यमुनापुलिनवने विजयी मुरारिरधुना ॥ ध्रु० ॥**

पद-समुदितमदने ७ रमणीवदने ७ चुम्बनवलिताधरे ६ मृगमदतिलकं २ लिखति क्रि० सपुलकं २ मृगम् १ इवऽ रजनीकरे ७ रमते क्रि० यमुनापुलिनवने ७ विजयी १ मुरारिः १ अधुनाऽ ॥ १ ॥

योजना-हेसखि अधुना यमुनापुलिनवने विजयी मुरारिः रमते-

समुदितमदने चुम्बनवलिताधरे रमणीवदने रजनीकरे मृगम् इव मृग मदतिलकम् लिखति ॥ १ ॥

**भाषार्थ**–हे सखि इस समयमें विजयवाले मुरारि कृष्णजी यमुनातटके वनमें क्रीडा करते हैं और रमणी ( गोपी ) योंके उस मुखारविंदपर चंद्रमामें मृगके समान कस्तूरीके तिलकको लिखते ( करते ) हैं जिसमें कामदेवकी वृद्धि है और चुंबनसे संकोचको प्राप्त हुआ है अधरओष्ठ जिसका ॥ १ ॥

**घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने ॥**
**कुरबककुसुमं चपलासुषमं रतिपतिमृगकानने ॥२॥**

पद--घनचयरुचिरे ७ रचयति क्रि० चिकुरे ७ तरलिततरुणानने ७ कुरबककुसुमं २ चपलासुषमम् २ रतिपतिमृगकानने ७ ॥ २ ॥

योजना–घनचयरुचिरे तरलिततरुणानने रतिपतिमृगकानने चिकुरे चपलासुषमं कुरबककुसुमं रचयति ॥ २ ॥

**भाषार्थ**–वह कामिनीका केशसमूह मेघके सदृश हो रहाहै, एवं वह केशपाश रतिनाथ स्वरूप कुरंगके चरणस्थल हो रहे हैं, और कृष्णजी उन्होंकी प्रशंसा करते हैं, और उन्होंने चप-लासदृश कुरबक पुष्प आरोपण करते हैं ॥ २ ॥

**घटयति सुघने कुचयुगगगने मृगमदरुचिरूषिते ॥**
**मणिसरममलं तारकपटलं नखपदशशिभूषिते ॥३॥**

पद--घटयति क्रि० सुघने ७ कुचयुगगगने ७ मृगमदरुचिरूषिते ७ मणिसरम् २ अमलम् २ तारकपटलम् २ नखपदशशि-भूषिते । ७३ ॥

योजना–हे सखि मृगमदरुचिरूषिते नखपदशशिभूषिते सुघने कुचयुगगगने अमलं मणिसरं तारकपटलं घटयति ॥ ३ ॥

भाषार्थ-वह सुंदरीका स्वरूप आकाशतारोंके समान मणिमय हारसे शोभायमान हो रहा है ॥ ३ ॥

**जितबिसशकले मृदुभुजयुगले करतलनलिनीदले ॥**
**मरकतवलयं मधुकरनिचयं वितरति हिमशीतले ४**

पद-जितबिसशकले ७ मृदुभुजयुगले ७ करतलनलिनीदले ७ मरकतवलयम् २ मधुकरनिचयम् २ वितरति क्रि० हिमशीतले ॥ ७॥४॥

योजना-हे सखि जितबिसशकले करतलनलिनीदले हिमशीतले मृदुभुजयुगले मरकतवलयं मधुकरनिचयं वितरति ॥ ४ ॥

भाषार्थ--वह नारीके हस्त मृणालस्वरूप है, और उसकी हथेलियां कमलस्वरूप हो रही है, उसीके हाथोंमें जो मणिमय कङ्कण हैं वे भ्रमरोंके तुल्य शोभा दे रहे हैं ॥ ४ ॥

**रतिगृहजघने विपुलापघने मनसिजकनकासने ॥**
**मणिमयरशनं तोरणहसनं विकिरति कृतवासने।५॥**

पद-रतिगृहजघने ७ विपुलापघने ७ मनसिजकनकासने ७ मणिमयरशनम् २ तोरणहसनम् २ वि.किरति क्रि० कृतवासने ॥७॥ ५ ॥

योजना-हे सखि विपुलापघने मनसिजकनकासने कृतवासनं रतिगृहजघने तोरणहसनं मणिमयरशनं विकिरति ॥ ५ ॥

भाषार्थ--वह नारीके जघनदेश रतिके भवनस्वरूप एवं कामदेवको कनकरचित आसन हो रहा है, उन्हें देखकर हरिजीका मदन रणवृद्धिको प्राप्त हो रहा है, उसपर हरिने मरकतमणि चंद्रहार समर्पण किया है, और वह चंद्रहार तोरणस्थ पुष्पहारके सदृश शोभायमान हो रहा है ॥ ५ ॥

**चरणकिसलये कमलानिलये नखमणिगणपूजिते ॥**
**बहिरपवरणं यावकभरणं जनयति हृदि योजिते ६॥**

पद—चरणकिसलये ७ कमलानिलये ७ नखमणिगणपूजिते ७ बहिःऽऽ अपवरणम् १यावकभरणम् १जनयति क्रि० हृदि७योजिते ॥६॥

योजना—हे सखि कमलानिलये नखमणिगणपूजिते हृदि योजिते चरणकिसलये बहिः अपवरणं, यावकभरणं जनयति ॥ ६ ॥

**भाषार्थ**—हे सखि श्रीकृष्णचन्द्रजी लक्ष्मीका निवास मणिरूपनखोंके समूहसे प्रकाशित और अपने हृदयपर स्थापन किये किसी गोपिके चरणारविंदपर ऐसा यावकरण (महावर) रचते हैं मानो बाहिरका आच्छादनही है ॥ ६ ॥

**रमयति सुदृशं कामपि सदृशं खलु हलधरसोदरे॥किम**
**फलमवसं चिरमिह विरसं वद सखि विटपोदरे ॥७॥**

पद—रमयति ७ सुदृशं २ काम् २ अपिऽ सदृशं २ खलुऽहलधरसोदरे ७ किम् १ अफलम् २ अवसम् क्रि० चिरम्ऽ इहऽ विरसं २ वद क्रि० सखि १ विटपोदरे ॥ ७ ॥ ७ ॥

योजना—हे सखि खलुहलधरसोदरे काम् अपि सदृशं सुदृशं रमयति सति इद विटपोदरे अहं विरसम् अफलं यथा स्यात्तथा किम् ( किमर्थं ) अवसम् इति त्वं वद ॥ ७ ॥

**भाषार्थ**—हे सखि यदि खलु ( ठकि) बलदेवके सोदर भ्राता ( कृष्णजी ) यौवन रूप आदिसे अपने तुल्य और सुंदरनेत्रवाली किसी नायिकाके संग रमण ( क्रीडा ) करते हैं तो मैं इस लताकुंजमें शृंगाररससे शून्य और निष्फल वास चिरकालतक क्यों करूं अर्थात् मेरा यहां बसना वृथा है ॥ ७ ॥

इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके ॥
कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके ८

इति श्रीगीतगोविन्दे पञ्चदशः प्रबंधः ॥ २९ ॥

पद—इह॰ रसभणने ७ कृतहरिगुणने ७ मधुरिपुपदसेवके ७ कलियुगचरितं २ न॰ वसतु क्रि० दुरितं २ कविनृपजयदेवके ॥ ७ ॥

योजना—रसभणने कृतहरिगुणने मधुरिपुपदसेवके कविनृपजयदेवके कलियुगचरितं दुरितम् इह ( मयि ) न वसतु ॥ ८ ॥

भाषार्थ—शृंगाररसके वक्ता हरिगुणोंके चिंतक और श्रीकृष्णके चरणसेवक इस जयदेवकविराज मेरे शरीरमें कलियुगके वा कलियुगमें किये पाप मत बसो अर्थात् श्रीकृष्णचन्द्रजीकी लीलाके वर्णनसे मेरे पाप नष्ट हों ॥ ८ ॥

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दूयसे
स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् ॥
पश्याद्य प्रियसंगमाय दयितस्याकृष्यमाणं गुणैरुत्कण्ठार्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ १॥

पद—न॰ आयातः १ सखि १ निर्दयः १ यदि॰ शठः १ त्वं १ दूति १ किं॰ दूयसे क्रि० स्वच्छन्दं २ बहुवल्लभः १ सः १ रमते क्रि० किं १ तत्र॰ ते ६ दूषणं १ पश्य क्रि० अद्य॰ प्रियसङ्गमाय ४ दयितस्य ६ आकृष्यमाणं १ गुणैः ३ उत्कण्ठार्तिभरात् ५ इव॰ स्फुटत् १ इदं १ चेतः १ स्वयं॰ यास्यति क्रि० ॥ १ ॥

योजना—हे सखि हे दूति यदि निर्दयः शठः न आयातः तर्हि त्वं किं दूयसे बहुवल्लभः स ( कृष्णः ) स्वच्छन्दं रमते तत्र ते दूषणम् किम् अस्ति दयितस्य गुणैः आकृष्यमाणम् उत्कण्ठार्तिभरात् स्फुटत् इव इदं चेतः प्रियसङ्गमाय अद्य स्वयं यास्यति इति त्वं पश्य ॥ १ ॥

**भाषार्थ**—हे सखि हे दूति ! यदि वह निर्दय शठ( वंचक ) कृष्णजी न आये तो क्यों दुःखी होती है और बहुत हैं प्यारी जिसकी ऐसे वह कृष्णजी स्वच्छंद ( अपनी इच्छासे ) रमण करते हैं इसमें तेरा क्या दोष है आज देख श्रीकृष्ण-चंद्रजी प्यारेके गुणा ( सुंदर आदि ) से वशीभूतहुआ और प्रीति और दुःखोंकी आधिकतासे बाहिर निकसताहुआ यह मेरा चित्त ( मन ) स्वयं ( आप ) प्रियसंगमके लिये जायगा अर्थात् श्रीकृष्णजीके परलोकमें संगमाथ मेरा मरण हो जायगा ॥ १ ॥

**अथ षोडशः प्रबन्धो देशांकरागेण रूपकताले गीयते १६**

**अनिलतरलकुवलयनयनेन ॥ तपति न सा किसलय-शयनेन ॥ सखि या रमिता वनमालिना ॥ ध्रु० ॥ १ ॥**

पद—अनिलतरलकुवलयनयनेन ३ तपति क्रि० नऽ सा १ किसलयशयनेन ३ सखि १ या १ रमिता १ वनमालिना ३ ॥ १ ॥

योजना—हे सखि अनिलतरलकुवलयनयनेन वनमालिना या रमिता सा किसलयशयनेन न तपति ॥ १ ॥

**भाषार्थ**—हे सखि पवनसे चंचल जो कमल उसके समान हैं नेत्र जिनके ऐसे वनमाली ( कृष्णजी ) ने जिस गोपीके संग रमण किया है वह कमलोंकी शय्यामें दुःखी नहीं होती अथवा उक्त वनमालीने जिस ( मेरी सदृश ) के संग रमण नहीं किया क्या वह कमलोंकी शय्यामें दुःखी नहीं होती अर्थात् अवश्य होती है ॥ १ ॥

**विकसितसरसिजललितमुखेन ॥ स्फुटति न सा मनसिजविशिखेन ॥ २ ॥**

पद-विकसितसरसिजललितमुखेन ३ स्फुटति क्रि० नऽ सा १ मनसिजविशिखेन न स्फुटति ॥ २ ॥

योजना-विकसितसरसिजललितमुखेन ( कृष्णेन ) या रमिता सा मनसिजविशिखेन न स्फुटति २ ॥

**भाषार्थ**-हे सखि खिलेहुए कमलके समान है मनोहर मुख जिसका ऐसे श्रीकृष्णजीके संग जिसने रमण किया है उसके कामदेवके बाणोंसे टुकडे नहीं होते ॥ २ ॥

**अमृतमधुरमृदुतरवचनेन ॥ ज्वलति न सा मलयजपवनेन ॥ ३ ॥**

पद-अमृतमधुरमृयुतरवचनेन ३ ज्वलति क्रि० नऽ सा १ मलयजपवनेन ३ ॥ ३ ॥

योजना-अमृतमधुरमृदुतरवचनेन कृष्णेन या रमिता सा मलयजपवनेन न ज्वलति ३ ॥ ३ ॥

**भाषार्थ**--हे सखि अमृतके समान मधुर वा मनोहर है कोमल वचन जिनके ऐसे कृष्णजीके संग जिस गोपीने रमण किया है वह गोपी मलयगिरिके पवनसे नहीं जलती ॥ ३ ॥

**स्थलजलरुहरुचिकरचरणेन ॥ लुठति न सा हिमकरकिरणेन ॥ ४ ॥**

पद-स्थलजलरुहरुचिकरचरणेन ३ लुठति क्रि० नऽ सा १ हिमकरकिरणेन ३ ॥ ४ ॥

योजना-स्थलजलरुहरुचिकरचरणेन कृष्णेन या रमिता सा हिमकरकिरणेन न लुठति ॥ ४ ॥

**भाषार्थ**—हे सखि स्थलमें पैदा हुए कमलोंके समान है कांति जिनकी ऐसे करचरणकमल जिनके ऐसे कृष्णजीके संग जिस गोपीने क्रीडा की है वह चंद्रमाकी किरणोंसे तपायमान नहीं होती है॥ ४ ॥

**सजलजलदसमुदयरुचिरेण ॥ दलति न सा हृदि चिरविरहेण ॥ ५ ॥**

पद—सजलजलदसमुदयरुचिरेण ३ दलति क्रि० नऽ सा १ हृदि ७ चिरविरहेण ३ ॥ ५ ॥

योजना—सजलजलदसमुदयरुचिरेण कृष्णेन या रमिता सा चिरविरहेण हृदि न दलति ॥ ५ ॥

**भाषार्थ**—हे सखि—जलसहितमेघसमूहके समान मनोहर श्रीकृष्णचंद्रजीके संग जिस गोपीने रमण किया है वह चिर कालके विरहसे विदीर्ण ( दो टूक ) नहीं होती ॥ ५ ॥

**कनकनिकषरुचिशुचिवसनेन ॥ श्वसिति न सा परिजनहसनेन ॥ ६ ॥**

पद—कनकनिकषरुचिशुचिवसनेन ३ श्वसिति क्रि० नऽ सा १ परिजनहसनेन ३ ॥ ६ ॥

योजना—हे सखि कनकनिकषरुचिशुचिवसनेन कृष्णेन या रमिता सा परिजनहसनेन न श्वसिति ॥ ६ ॥

**भाषार्थ**—हे सखि सुवर्णकी रेखाके समान पीत निर्मल हैं वस्त्र जिनके ऐसे श्रीकृष्णजीके संग जिस गोपीने रमण किया है वह जगत् वा सखियोंकी हँसीसे लंबे २ श्वास नहीं लेती अर्थात् जिसके संग रमण नहीं किया वह श्वास लेतीहै ॥ ६ ॥

सकलभुवनजनवरतरुणेन ॥ वहति न सा रुज-
मतिकरुणेन ॥ ७ ॥

पद—सकलभुवनजनवरतरुणेन ३ वहति क्रि० नऽ सा १ रुजम् २ अतिकरुणेन ३ ॥ ७ ॥

योजना—सकलभुवनजनवरतरुणेन अतिकरुणेन या रमिता सा रुजं न वहति ॥ ७ ॥

भाषार्थ—हे सखि संपूर्ण भुवनके जनोंमें श्रेष्ठ—तरुण और अत्यंत दयाशील, कृष्णजीके संग जिस गोपीने रमण किया है वह दुःखको प्राप्त नहीं होती ॥ ७ ॥

श्रीजयदेवभणितवचनेन ॥ प्रविशतु हरिरपि हृद-
यमनेन ॥ ८ ॥

इति श्रीगीतगोविन्दे षोडशः प्रबंधः ॥ १६ ॥

पद—श्रीजयदेवभणितवचनेन ३ प्रविशतु क्रि० हरिः १ अपिऽ हृदयम् २ अनेन ३ ॥ ८ ॥

योजना—अनेन श्रीजयदेवभणितवचनेन हरिः अपि हृदयं प्रविशतु ॥ ८ ॥

भाषार्थ—श्रीजयदेवके कहे इस वचनसे भक्तोंके हृदयमें हरि ( कृष्णजी ) प्रवेश करो—अर्थात् हरिके चरणारविंदके प्रवेश-से उनके हृदयके पाप नष्ट हों ॥ ८ ॥

इति गीतगोविंदभाषाविवृतौ षोडशः प्रबंधः ॥ १६ ॥

मनोभवानन्दन चन्दनानिल प्रसीद रे दक्षिण मुञ्च
वामताम् ॥ क्षणं जगत्प्राण विधाय माधवं पुरो
मम प्राणहरो भविष्यसि ॥ १ ॥

पद-मनोभवानन्दन १ चन्दनानिल १ प्रसीद क्रि० रे ऽ दक्षिण १ मुञ्च क्रि० वामताम् २ क्षणं ऽ जगत्प्राण १ विधाय ऽ माधवम् २ पुरः ऽ मम ६ प्राणहरः १ भविष्यसि क्रि० ॥ १ ॥

योजना-हे मनोभवानन्दन रे दक्षिण हे जगत्प्राण हे चन्दनानिल त्वं प्रसीद वामतां मुञ्च माधवम् क्षणं यथा स्यात्तथा पुरः विधाय मम प्राणहरः त्वं भविष्यसि ॥ १ ॥

**भाषार्थ**-हे कामदेवको आनंदके कारण हे दक्षिण हे जगत्के प्राण चंदनके पवन तू वामता ( प्रतिकूलता ) को त्याग दे और माधव ( कृष्णजी ) को क्षणमात्र मेरे आगे करके प्राणोंका नाश करियो क्योंकि प्राणोंके गमनके समयमें श्रीकृष्णजीका दर्शन दुर्लभ है ॥ १ ॥

**रिपुरिव सखीसंवासोऽयं शिखीव हिमानिलो विषमिव सुधारश्मिर्दूरं दुनोति मनोगमम् ॥ हृदयमदये तस्मिन्नेवं पुनर्वलते बलात् कुवलयदृशां वामः कामो निकामनिरङ्कुशः ॥ २ ॥**

पद-रिपुः १ इव ऽ सखीसंवासः १ अयम् १ शिखी १ इव ऽ हिमानिलः १ विषम् १ इह ऽ सुधारश्मिः १ दूरं ऽ दुनोति क्रि० मनः २ मम ६ हृदयम् १ अदये ७ तस्मिन् ७ एवं ऽ पुनः ऽ वलते क्रि० बलात् ५ कुवलयदृशाम् ६ वामः १ निकामनिरङ्कुशः १ ॥ २ ॥

योजना-हे सखि अयम् सखीसंवासः रिपुः इव हिमानिलः शिखा इव सुधारश्मिः विषम् इव मम मनः दुनोति एवम् मम हृदयं तस्मिन् अदये ( कृष्णे ) पुनः बलात् वलते अतः कुवलयदृशां वामः कामः निकामनिरङ्कुशः भवति ॥ २ ॥

**भाषार्थ**-हे सखि यह सखियोंके संग वास शत्रुके समान

और शीतल पवन अग्निके समान और चंद्रमा विषके समान मेरे मनको पीडा देते हैं और इस प्रकार दुःखी हुआ भी मेरा मन फिर भी उसी निर्दयी कृष्णजीमें बलसे जाता है इससे प्रतीत होता है कि स्त्रियोंके लिये क्रूर जो कामदेव है वह अत्यंत निरंकुश है अर्थात् चाहे जहां ले जाते हुए कामदेवको कोई नहीं हटा सकता ॥ २ ॥

**बाधां विधेहि मलयानिल पञ्चबाण प्राणान् गृहाण न गृहं पुनराश्रयिष्ये॥ किं ते कृतान्तभगिनि क्षमया तरङ्गैरङ्गानि सिञ्च मम शाम्यतु देहदाहः ॥ ३ ॥**

पद-बाधाम् २ विधेहि क्रि० मलयानिल १ पञ्चबाण १ त्वम् १ प्राणान् २ गृहाण क्रि० नऽ गृहम् २ पुनःऽ आश्रयिष्ये क्रि० किम् १ ते ६ कृतान्तभगिनि १ क्षमया ३ तरङ्गैः ३ अङ्गानि २ सिञ्च क्रि० मम ६ शाम्यतु क्रि० देहदाहः १ ॥ ३ ॥

योजना-हे मलयानिल त्वं बाधां विधेहि हे पञ्चबाण त्वं प्राणान् गृहाण अहं गृहं पुनः न आश्रयिष्ये हे कृतान्तभगिनि ( यमुने ) ते क्षमया किं फलम् त्वं मम अंगानि तरंगैः सिंच मम देहदाहः शाम्यतु मरणं भवतु इत्यर्थः ॥ ३ ॥

**भाषार्थ**-हे चंदनके ! पवन तू मेरी पीडाको कर और हे कामदेव ! मेरे प्राणोंको ग्रहण कर जिससे मैं फिर घरमें न जाऊं और हे यमुने ! शांति क्यों कर रही है अपने तरंगोंसे मेरे अंगोंको सींच अर्थात् मुझे डबोले और डूबनेसे मेरे देहकी शांति हो अर्थात् मेरा मरणही हो जाय ॥ ३ ॥

**सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरादानम्रै-**
**र्मुकुटेन्द्रनीलमणिभिः सन्दर्शितेन्दीवरम् ॥ स्व-**
**च्छन्दं मकरन्दसुन्दरगलन्मदाकिनीमेदुरं श्रीगो-**
**विन्दपदारविन्दमशुभस्कन्दाय वन्दामहे ॥ ४ ॥**

**इति श्रीकविराजश्रीजयदेवकृत गीतगोविन्दे महाकाव्ये श्रीनागरनारायणो नाम सप्तमः सर्गः ॥ ७ ॥**

पद–सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैः ३ अमन्दादरात् ५ आनम्रैः ३ मुकुटेन्द्रनीलमणिभिः ३ सन्दर्शितेन्दीवरम् २ स्वच्छन्दम् २ मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरम् २ श्रीगोविन्दपदारविन्दम् २ अशुभस्कन्दाय ४ वन्दामहे क्रि० ॥ ४ ॥

योजना–अमन्दादरात् आनम्रैः सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैः मुकुटेंद्रनीलमणिभिः संदर्शितेंदीवरम् स्वच्छन्दं यथा स्यात्तथा मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दम् वयम् अशुभस्कन्दाय वन्दामहे ( नमाम ) ॥ ४ ॥

**भाषार्थ**–अत्यंत आदरपूर्वक चारोंतरफसे नम्र अर्थात् नमस्कार करते अतीवप्रसन्न इंद्रआदि संपूर्ण देवताओंने मुकुटोंकी इंद्रनीलमणियोंसे जो देखता है नीलकमलका भ्रम जिसमें और स्वच्छंद रीतिसे पुष्पोंके रसकी तुल्य निकसती हुई गंगासे स्निग्ध ( चिकना वा गीला ) जो श्रीगोविन्दका चरणारविन्द उसको अशुभ ( पाप ) नाशके लिये हम नमस्कार करते हैं ॥ ४ ॥

इति श्रीजयदेवकृते गीतगोविंदे पं० मिहिरचन्द्रकृतभाषाविवृति-साहिते महाकाव्ये श्रीनागरनारायणो नाम सप्तमः सर्गः ॥ ७॥

## अष्टमः सर्गः ८.

**अथ कथमपि यामिनीं निनीय स्मरशरजर्जरिताऽपि सा प्रभाते ॥ अनुनयवचनं वदन्तमग्रे प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥**

पद-अथऽ कथम्ऽ अपिऽ यामिनीं २ निनीयऽ स्मरशरजर्जरिता १ अपिऽ प्रियं १ प्रभाते ७ अनुनयवचनं २ वदन्तम् २ अग्रे ७ प्रणतम् २ अपिऽ प्रियम् २ आह क्रि० साभ्यसूयम् २ ॥ १ ॥

योजना-अथ ( अनन्तरं मंगलं वा ) स्मरशरजर्जरिता अपि ,सा ( राधा ) कथम् अपि यामिनीं निनीय प्रभाते अनुनयवचनं वदन्तम् अग्रे प्रणतम् अपि प्रियं साभ्यसूयं यथा स्यात्तथा इदं वचनम् आह ( उवाच ) ॥ १ ॥

**भाषार्थ**-इसके अनंतर कामदेवके बाणोंसे पीडित भी वह राधाजी बडे कष्टसे रात्रिको व्यतीत करके प्रभातके समय प्रार्थनाके वचनोंको कहते और प्रणाम करते हुए भी प्यारे श्रीकृष्णजीको ईर्ष्यासहित यह वचन कहने लगी ॥ १ ॥

**अथ सप्तदशः प्रबन्धो भैरवरागेण यतिताले गीयते १७**

**रजनिजनितगुरुजागररागकषायितमलसनिमेषम् । वहति नयनमनुरागमिव स्फुटमुदितरसाभिनिवेशम् ॥ १ ॥ हरिहरि याहि माधव याहि केशव मा वद कैतववादम् ॥ तामनुसर सरसीरुहलोचन या तव हरति विषादम् ॥ ध्रु० ॥**

पद्--रजनिजनितगुरुजागररागकषायितम् २ अलसनिमेषम् २ वहति क्रि०नयनम्२अनुरागम् २ इवऽस्फुटम् २ उदितरसाभिनिवेशम् २ हरिहरिऽ याहि क्रि०माधव १ याहि क्रि० केशव १ माऽ वद क्रि० कतववादम् २ ताम् २ अनुसर क्रि०' सरसीरुहलोचन १ या १ तव हरति क्रि० विषादम् २ ॥ १ ॥

योजना--हरिहरि ( रामराम ) हे माधव त्वं याहि हे केशव त्वम् याहि त्वम् कैतववादम् मा वद हे सरसीरुहलोचन त्वम् ताम् अनुसर या तव विषादम् हरति यतः रजनिजनितगुरुजागररागकषायितम् अलसनिमेषं ते नयनम् स्फुटम् यथा स्यात्तथा उदितरसाभिनिवेशम् अनुरागम् इव वहति धारयति ॥ १ ॥

**भाषार्थ**--हरि हरि ( खेद है २ ) हे माधव ! आप जाओ हे केशव आप जाओ और छलके वचन मत कहो हे कमलनयन ( कमलनेत्र ) उस नायिकाके समीप जाओ जो आपके दुःखको दूर करे है क्योंकि रात्रिके अत्यंत जागनेसे रक्त हैं और रात्रिके जागनेसे ही पैदा हुये आलस्यसे कुछ २ चलती हैं पलक जिसकी और पैदा हुआ है शृंगाररसका अभिनिवेश ( आग्रह ) जिसमें ऐसा आपका नेत्र प्रकट अन्यस्त्रीके अनुराग ( प्रेम ) कोही मानो धारण कररहा है अर्थात् आपकी अन्य स्त्रीमें प्रीति आपके ही नेत्रोंसेही प्रतीत होती है ॥ १ ॥

**कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् ॥**
**दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम्२॥**

पद--कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् १ दशनवसनम् १ अरुणम् १ तव ६ कृष्ण १ तनोति क्रि० तनोः ६ अनुरूपम् १ ॥ २ ॥

योजना--हे कृष्ण तव अरुणम् दशनवसनं कज्जलमलिनविलोचन चुम्बनविरचितनीलिमरूपं सत् तव तनोः अनुरूपं तनोति ॥ २ ॥

भाषार्थ-हे श्रीकृष्णचंद्रजी आपका रक्त ( लाल ) अधरोष्ठ कज्जलसे मलीन नेत्रोंके चुंबनसे नीलरूप होकर आपके शरीरके समान प्रतीत होता है अर्थात् रक्त भी ओष्ठ अन्य कामिनीके श्यामनेत्रके चुंबनसे श्याम प्रतीत होता है इससे आप उसीके समीप जाओ ॥ २ ॥

वपुरनुवहति तव स्मरसङ्गरखरनखरक्षतलेखम्।मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ३॥

पद--वपुः १ अनुवहति क्रि० तव ६ स्मरसङ्गरखरनखरक्षतलेखम् १ मरकतशकलकलितकलधौतलिपेः ६ इव ऽ रतिजयलेखम् २ ॥ ३ ॥

योजना--हे कृष्ण स्मरसङ्गरखरनखरक्षतलेखं तव वपुः मरकतशकलकलितकलधौतलिपेः इव रतिजयलेखम् अनुवहति ( अनुकरोति ) ॥ ३ ॥

भाषार्थ-हे श्रीकृष्णजी कामदेवके संग्राममें कठोर नखोंके क्षतों ( घाव ) की हैं रेखा जिसमें ऐसा आपका शरीर मरकत मणिमें लिखे जो सुवर्णके अक्षर उनके समान रति ( क्रीडा ) के जयपत्रका अन्य धारण करता है अर्थात् आपके शरीरसे अन्यस्त्रीके नखोंके क्षत हैं इससे आप उसीके समीप जाओ ३

चरणकमलगलदलक्तकासिक्तमिदं तव हृदयमुदारम् । दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारम् ॥४॥

पद-चरणकमलगलदलक्तकासिक्तम् १ इदम् १ तव ६ हृदयम् १ उदारम् १ दर्शयति क्रि० इव ऽ बहिः ऽ मदनद्रुमनवकिसलयपरिवारम् २ ॥ ४ ॥

योजना–हे कृष्ण चरणकमलगलदलक्तकसिक्तम् उदारम् इदं तव हृदयम् मदनद्रुमनवकिसलयपरिवारं बहिः दर्शयति इव ॥ ४ ॥

भाषार्थ–हे श्रीकृष्णजी चरणकमलोंमेंसे गिरता जो अलक्तक ( महावर ) उससे सींचा यह आपका मनोहर हृदय मानो कामदेवरूपवृक्षके नवीन २ पत्तोंके परिवारको बाहिर दिखाता है अर्थात् जिसके अलक्तका चिह्न हृदयमें हैं उसीके समीप आप जाइये ॥ ४ ॥

दशनपदं भवदधरगतम्मम जनयति चेतसि खेदम् ॥
कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ५॥

पद–दशनपदम् १ भवदधरगतम् १ मम ६ जनयति क्रि०चेतसि७ खेदं २ कथयति क्रि० कथम्ऽअधुना ऽ अपिऽ मया ३ सहऽते तव ६ वपुः १ एतत् १ अभेदम् २ ॥ ५ ॥

योजना–यदि भवदधरगतं दशनपदं मम चेतसि खेदम् जनयति तर्हि अधुना अपि एतत् तव वपुः मया सह कथम् अभेदं कथयति ॥५॥

भाषार्थ–हे श्रीकृष्णजी आपके ओष्ठोंके ऊपर जो अन्य कामिनीके दाँतोंके क्षत हैं वे मेरे चित्तमें खेद करते हैं इससे अब भी यह आपका शरीर मेरे संग कैसे अभेद ( एकरूपता ) को कहता है अर्थात् पहिलेके समान अब मेरा अभेद नहीं है उससे आप उसीके समीप जाओ जिसने दाँतोंसे क्षत किये हैं ॥ ५ ॥

बहिरिव मलिनतरं तव कृष्ण मनोऽपि भविष्यति नूनम् ॥ कथमथ वञ्चयसे जनमनुगतमसमशरज्वरदूनम् ॥ ६ ॥

पद--बहिःऽइवऽमलिनतरम् १ तव ६ कृष्ण १ मनः १ अपिऽ भविष्यति क्रि० नूनम्ऽकथम्ऽअथऽ वञ्चयसे क्रि० जनम् २ अनुगतम् २ असमशरज्वरदूनम् २ ॥ ६ ॥

योजना--हे कृष्ण तव मनः अपि बहिः इव मलिनतरं भविष्यति इति नूनम् अथ ( अन्यथा ) अनुगतम् असमशरज्वरदूनम् जनम् ( मादृशं ) कथम् वञ्चयसे ॥ ६ ॥

**भाषार्थ**-हे श्रीकृष्णजी आपका मन भी बाहिरके समान अत्यंत मलीन होजायगा यह प्रतीत होता है अथ ( न होता तो ) मेरे सरीखे अनुयायी और कामदेवके ज्वरसे पीडित ( दुःखी ) जनकी वंचना क्यों करते, अर्थात् शरणागतकी वंचनासे प्रतीत है कि मन भी मलीन होजायगा ॥ ६ ॥

**भ्रमति भवानबलाकवलाय वनेषु किमत्र विचित्रम्॥**
**प्रथयति पूतनिकैव वधूवधनिर्दयबालचरित्रम् ॥७॥**

पद-भ्रमति क्रि० भवान् १ अबलाकवलाय ४ वनेषु ७ किम् १ अत्रऽ विचित्रम् १ प्रथयति क्रि० पूतनिका १ एवऽ वधूवधनिर्दयबालचरित्रम् ॥ २ ॥ ७ ॥

योजना-हे कृष्ण भवान् अबलाकवलाय वनेषु भ्रमति अत्र किं विचित्रम् न किमपीत्यर्थः । यतः पूतनिका एव तव वधूवधनिर्दयबालचरित्रम् प्रथयति ॥ ७ ॥

**भाषार्थ**-हे श्रीकृष्णजी आप स्त्रियोंके ग्रसनेके लिये वनोंमें भ्रमते हैं इसमें क्या विचित्र ( आश्चर्य ) है जिससे पूतनाही निर्दय होकर वधूओंके मारनेके आपके बालचरित्रको प्रकट करती है ॥७॥

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् ॥
शृणुत सुधामधुरं विबुधा विबुधालयतोऽपि दुरापम् ८

इति श्रीगीतगोविन्दे सप्तदशः प्रबंधः ॥ १७ ॥

पद—श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापम् २ शृणुत क्रि० सुधामधुरम् २ विबुधाः १ विबुधालयतः ५ अपिऽ दुरापम् ॥ २८॥

योजना—हे विबुधाः सुधामधुरं विबुधालयतः अपि दुरापम् श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापं यूयं शृणुत ॥ ८ ॥

भाषार्थ--भो पंडितो अमृतसें भी मधुर और स्वर्गमें भी दुर्लभ श्रीजयदेवकके कहे रतिसे वंचित ( त्यागी ) खंडिता युवतिके विलापको तुम सुनो ॥ ८ ॥

इतिं गीतगोविन्दभाषाविवृतौ सप्तदशः प्रबन्धः ॥ १७ ॥

तवेदं पश्यन्त्याः प्रसरदनुरागं बहिरिव प्रिया-
पादालक्तच्छुरितमरुणद्योति हृदयम् ॥ ममाद्य
प्रख्यातप्रणयभरभङ्गेन कितव त्वदालोकः शोका-
दपि किमपि लज्जां जनयति ॥ १ ॥

पद—६ इदम् २ पश्यन्त्याः ६ प्रसरदनुरागम् २ बहिःऽ इवऽ प्रियापादालक्तच्छुरितम् २ अरुणद्योति २ हृदयं २ मम ६ अद्यऽ प्रख्यातप्रणयभरभङ्गेन २ कितव १ त्वदालोकः १ शोकात् ५ अपिऽ किम्ऽअपिऽ लज्जां २ जनयति क्रि० ॥ १ ॥

योजना—हे कितव बहिः प्रसरदनुरागम् इव प्रियापादालक्तच्छुरितम् अरुणद्योति इदं तव हृदयं पश्यन्त्याः मम अद्य प्रख्यातप्रणयभरभङ्गेन शोकात् अपि किम् अपि लज्जां जनयति ॥ १ ॥

भाषार्थ—हे वंचक ठिगोर ( कृष्णजी ) बाहिर दीखता है

अनुराग जिससे और प्यारोंके चरणोंका जो अलक्त उससे व्याप्त और लाल है कान्ति जिसकी ऐसे इस आपके हृदयको देखती हुई मुझे जगत्में प्रसिद्ध मेरी आपकी प्रीतिकी अधिकताके भंगसे हुआ जो शोक उससे आपका दर्शन किसी एक लज्जाको पैदा करता है अर्थात् उस लज्जाको मैं मुखसे कह नहीं सक्ता ॥ १ ॥

प्रातर्नीलनिचोलमच्युतमुरः संवीतपीतांशुकं
राधायाश्चकितं विलोक्य हसति स्वैरं सखी-
मण्डले॥व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधा-
ऽऽनने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय
नन्दात्मजः ॥ २ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे-
महाकाव्ये खण्डितावर्णने विलक्षणल-
क्ष्मीपतिर्नामाऽष्टमः सर्गः ॥ ८ ॥

पद-प्रातःऽ नीलनिचोलम् २ अच्युतम् २ उरः २ संवीतपीतांशुकं २ राधायाः ६ चकितंऽ विलोक्य ऽहसति ७ स्वैरम् २ सखीमण्डले ७ व्रीडाचञ्चलम् २ अञ्चलम् २ नयनयोः ६ आधायऽ राधानने ७ स्वादुस्मेरमुखः १ अयम् १ अस्तु क्रि० जगदानन्दाय ३ नन्दात्मजः ॥ १ ॥ २ ॥

योजना०प्रातः अच्युतम् नीलनिलोचलं राधायाः उरः संवीतपीतांशुकं चकितं यथा स्यात्तथा विलोक्य सखीमण्डले स्वैरं हसति सति व्रीडाचञ्चलं नयनयोः अञ्चलं राधानने आधाय स्वादुस्मेरमुखः अयं नन्दात्मजः जगदानन्दाय अस्तु ॥ २ ॥

भाषार्थ-किसीदिन प्रातःकालके समय श्रीकृष्णचंद्रजीको

राधाजीके नीलवस्त्रधारण किये और राधाजीके वक्षःस्थलको पीताम्बरसे ढकेहुएको चकितरूपसे देखकर जब सखियोंका मण्डल शनैःशनैः हँसने लगा तब लज्जासे चंचलनेत्रोंके कटाक्षसे राधाजीके मुखको देखकर किंचित् हँसीसे सुन्दर है मुख जिनका ऐसे यह नंदके पुत्र श्रीकृष्णचंद्रजी जगतमें आनंद करैं ॥ २ ॥

**अथ तां मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम्॥ अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहः सखी ॥ १ ॥**

पद–अथऽ तां २ मन्मथखिन्नां २ रतिरसखिन्नां २ विषादसंपन्नाम् २ अनुचिन्ततहरिचरितां २ कलहान्तरिताम् २ उवाच क्रि० रहःऽ सखी ॥ १ ॥ १ ॥

योजना–अथ ( अनंतरं मंगलं वा ) सखी मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम् अनुचिन्तितहरिचरितां कलहान्तरितां तां ( राधां ) रहः ( एकांते ) उवाच ॥ १ ॥

**भाषार्थ**–इसके अनंतर कामदेवसे दीन रतिके रससे राहत और विषाद (दुःख ) से युक्त और वारंवार श्रीकृष्णजीके चरित्रों (लीला) का कियाहै चिंतन जिसनें और कलहान्तरिता (अर्थात् प्रीतिके कोपसे मिलेपतिको पाकर जो अन्य स्त्रीके संगसे तपायमान हो वह नायिका कलहांतरिता होती है ऐसी उस) राधाजीको एकांतमें सखी ये वचन बोली ॥ १ ॥

**अथ अष्टादशः प्रबन्धो गुर्जरीरागेण यतिताले गीयते ॥ १८ ॥**

**हरिरभिसरति वहति मधुपवने ॥ किमपरमधिक-
सुख सखि भवने ॥ माधवे मा कुरु मानिनि
मानमये ॥ ध्रु० ॥**

पद-हरिः १ अभिसरति क्रि० वहति ७ मधुपवने ७ किम् १ अप-रम् १ अधिकसुखम् १ सखि १ भवने ७ माधवे ७ माऽकुरु क्रि० मानिनि १ मानम् २ अयेऽ ॥ १ ॥

योजना-अये मानिनि राधे माधवे मानं मा कुरु यतः मधुपवने वहति सति हरिः अभिसरति हेसखि भवने अपरं अधिकसुखं किम् आस्ति न किंचित् इत्यर्थः ॥ १ ॥

भाषार्थ-हे मानवाली श्रीराधे माधव ( कृष्ण ) के विषे आप अभिमान मत करो क्योंकि जब वसंतका पवन चलेगा तब हरि ( श्रीकृष्णजी ) आपही तेरी संकेतभूमिमें आजायँगे और हे सखि इससे अन्य और कौन अधिक सुख भवन (घर) में होगा अर्थात् नायकके स्वयं आनेको देखकर आपको क्रोध करना युक्त नहीं है ॥ १ ॥

**तालफलादपि गुरुमतिसरसम् ॥
किं विफलीकुरुषे कुचकलशम् ॥ २ ॥**

पद-तालफलात् ५ अपिऽ गुरुम् २ अतिसरसम् २ किम् १ विफलीकुरुषे क्रि० कुचकलशम् २ ॥ २ ॥

योजना-हेराधे तालफलात् अपि गुरुम् अतिसरसं कुचकलशं त्वं किं विफलीकुरुषे वृथा मा कुरु इत्यर्थः ॥ २ ॥

भाषार्थ-तालवृक्षके फलसे भी अधिक गुरु ( कठिन वा स्थूल ) और अतीव रससहित कुचकलशोंको क्यों निष्फल

करती है अर्थात् श्रीकृष्णचंद्रजीके हस्तस्पर्शके बिना ये आपके कलशके समान स्तन वृथा हैं इससे कोप करना युक्त नहीं ॥ २ ॥

**कति न कथितमिदमनुपदमचिरम् ॥**
**मा परिहर हरिमतिशयरुचिरम् ॥ ३ ॥**

पद--कति १ न ऽ कथितम् १ इदम् १ अनुपदम् ऽ अचिरम् ऽ मा ऽ परिहर क्रि० हरिम् २ अतिशयरुचिरम् २ ॥ ३ ॥

योजना--अतिशयरुचिरं हरिं त्वं मा परिहर इदम् अचिरम् अनुपदं कतिवारं न कथितम्, अपि तु बहुवारं कथितम् इत्यर्थः ॥ ३ ॥

**भाषार्थ**--हे श्रीराधे अत्यंत रुचिर ( सुंदर ) श्रीकृष्णचंद्रजीका त्याग मत करो यह अभी वारंवार केवार नहीं कहा अर्थात् बहुतवार कहा था इससे कोप करना अयुक्त है ॥ ३ ॥

**किमिति विषीदसि रोदिषि विकला ॥**
**विहसति सभा तव सकला ॥ ४ ॥**

पद--किम् १ इति ऽ विषीदसि क्रि० रोदिषि क्रि० विकला १ विहसति क्रि० युवतिसभा १ तव ६ सकला १ ॥ ४ ॥

योजना--हे राधे त्वं विकला सती विषीदसि रोदिषि इति किम् तव सकला युवतिसभा विहसति ॥ ४ ॥

**भाषार्थ**--हे श्रीराधे तुम व्याकुल होकर क्यों रोती हो और दुःखी होती हो यह संपूर्ण स्त्रियोंकी सभा तुम्हारी हँसी करती है ॥ ४ ॥

**मृदुनलिनीदलशीतलशयने ॥**
**हरिमवलोकय सफलय नयने ॥**

पद्-मृदुनलिनीदलशीतलशयने ७ हरिम् २ अवलोकय क्रि० सफलय क्रि०नयने २ ॥ ५ ॥

योजना-हे राधे त्वं मृदुनलिनीदलशीतलशयने हरिम् अवलोकय नयने सफलय ॥ ५ ॥

**भाषार्थ**-हे श्रीराधे आप कोमल २ कमलिनीके पत्तोंसे शीतलकी हुई शय्याके ऊपर श्रीकृष्णचंद्रजीका दर्शन करो और अपने नेत्रोंको सफल करो ॥ ५ ॥

जनयसि मनसि किमिति गुरुखेदम् ॥
शृणु मम वचनमनीहितभेदम् ॥ ६ ॥

पद्-जनयसि क्रि०मनसि ७ किम् १ इतिऽ गुरुखेदम् २ शृणु क्रि०मम ६ वचनम् २ अनीहितभेदम् ॥ ६ ॥

योजना-हे राधे त्वं मनसि गुरुखेदं किमिति जनयसि अनीहितभेदं मम वचनं शृणु ॥ ६ ॥

**भाषार्थ**-हे राधे आप अपने मनमें भारी खेदको क्यों पैदा करती हो जिसमें विरहकी आकांक्षा नहीं ऐसे मेरे वचनको सुनो अर्थात् मैं आपके हितका वचन कहती हूं ॥ ६॥

हरिरुपयातु वदतु बहु मधुरम् ॥
किमिति करोषि हृदयमतिविधुरम् ॥ ७ ॥

पद्-हरिः १ उपयातु क्रि०वदतु क्रि०बहुऽ मधुरम् २ किम् २ इतिऽ करोषि क्रि०हृदयम् २ अतिविधुरम् २ ॥ ७ ॥

योजना-हे राधे हरिः उपयातु मधुरं वचनम् बहु वदतु त्वम् अति विधुरं हृदयं किम् इति करोषि ॥ ७ ॥

**भाषार्थ**-हे राधे आप अपने हृदयको अत्यंत विह्वल क्यों

करती हो श्रीकृष्णचंद्र आपके समीप आओ और अनेक मधुर २ वचनोंको कहो ॥ ७ ॥

श्रीजयदेवभणितमतिललितम् ॥
सुखयतु रसिकजनं हरिचरितम् ॥ ८ ॥

इति श्रीगीतगोविन्दे अष्टादशः प्रबन्धः ॥ १८॥

पद–श्रीजयदेवभणितम् १ अतिललितम् १ सुखयतु क्रि० रसिकजनं २ हरिचरितम् १ ॥ ८ ॥

योजना–श्रीजयदेवभणितम् अतिललितं हरिचरितं रसिकजनं सुखयतु ॥ ८ ॥

भाषार्थ–श्रीजयदेवका कहा अत्यंत मनोहर यह हरिका चरित्र रसिकजनोंको सुख दो अर्थात् श्रीकृष्णके भक्तोंको सुखदायी हो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ अष्टादशः प्रबंधः ॥ १८॥

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे विमुखतां याताऽसि तस्मिन् प्रिये ॥ तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १ ॥

पद–स्निग्धे ७ यत् परुषा १ असि क्रि० यत् प्रणमति ७ स्तब्धा १ असि क्रि० यत् रागिणि ७ द्वेषस्था १ असि क्रि० यत् उन्मुखे ७ विमुखताम् २ याता १ असि क्रि० तस्मिन् ७ प्रिये ७ तत् १ युक्तम् १ विपरीतकारिणि १ तव ६ श्रीखण्डचर्चा १ विषम् १ शीतांशुः १ तपनः १ हिमम् १ हुतवहः १ क्रीडामुदः १ यातनाः १॥ १

योजना–हे विपरीतकारिणि राधे यत् ( यतः ) त्वं स्निग्धे तास्मिन् प्रिये परुषा असि यत् प्रणमति सति स्तब्धा असि यत् रागिणि सति द्वेषस्था असि यत् उन्मुखे विमुखतां याता असि अतः तव श्रीखण्डचर्चा विषं शीतांशुः ( चंद्रः ) तपनः ( सूर्यः ) हिमं हुतवहः ( अग्निः ) अभूत् क्रीडामुदः यातनाः अभूवन् इति युक्तम् उचितम् अभूत् इत्यर्थः ॥ १ ॥

भाषार्थ–हे विपरीत ( उलटा ) कारिणि राधे जिससे आप मधुरवचनोंके वक्ता उन श्रीकृष्णजी प्यारेको कठोर वचन कहती हो और प्रमाण करते उनको स्थावर ( जड ) के समान हो रही हो और अनुराग (प्रीति ) करते उनक संग वैर करती हो और संमुख आये उनके विमुख हो जाती हो इन कारणोंसे यह युक्त हुये हैं कि आपको चंदनकी चर्चा विषकी तुल्य और चंद्रमा सूर्यके समान और हिम ( शीत ) अग्निके तुल्य और क्रीडाके आनंद दुःखोंके समान प्रतीत होते हैं अर्थात् विपरीत करताको विपरीत ही कर्म होने ही योग्य है ॥ १ ॥

अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसनस्तब्धा-
कर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् ॥ दृप्य-
द्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंस-
रिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः ॥ २ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महाकाव्ये मुग्धमुकुन्दवदनो नाम नवमः सर्गः ॥ ९ ॥

पद–अन्तर्मोहनमौलिघूर्णनचलन्मंदारविस्रंसनस्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः १ कुरङ्गीदृशाम् ६ दृप्यद्दानवदूयमानदिविषद्दुर्वार-

दुःखापदाम् ६ भ्रंशः १ कंसरिपोः ६ व्यपोहयतु क्रि० वः ६ अश्रेयांसि २ वंशीरवः १ ॥ २ ॥

योजना—कुरङ्गीदृशाम् अन्तर्मोहनमौलिघूर्णनवलन्मन्दारविस्रंसन-स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः दृप्यद्दानवदूयमानदिविषद्दुर्वार-दुःखापदाम् भ्रंशः कंसरिपोः वंशीरवः वः ( युष्माकम् ) अश्रेयांसि व्यपोहयतु ( नाशयतु ) ॥ २ ॥

**भाषार्थ**—मृगनयनीस्त्रियोंके मनका मोहन और साधु २ कहकर शिरका कँपाना शिरमें गुंदेहुये पारिजातपुष्पोंका नीचे पडना और इच्छासे रहित जो स्तब्ध है उनका आकर्षण ( खींचना ) और नेत्रोंका उत्साह इन सबके लिये महामंत्ररूप अर्थात् वंशीके शब्दको सुनकर सब नायिका कामदेवसे युक्त हो जाती हैं और अभिमानी जो दानव ( दैत्य ) उनसे दुःखी जो देवता उनकी जो दूर होनेके अयोग्य दुःखोंकी आपदा उनका नाशक जो कंसके शत्रु श्रीकृष्णचन्द्रजीकी वंशीका शब्द है वह हे भक्तो ! आपके अकल्याणोंको नष्टकरो अर्थात् वंशीके शब्दको सुनकर देवता भी प्रसन्न होते हैं ॥ ३ ॥

इति श्रीजयदेवकृतगीतगोविन्दे पं० मिहिरचन्द्रकृतभाषा-विवृतिसहिते मुग्धमुकुन्दवदनो नाम नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः १०.

अत्रान्तरे मसृणरोषवशामसीमानिःश्वासनिःसहमुखीं सुमुखीमुपेत्य ॥ सव्रीडमीक्षितसखीवदनां दिनान्ते सानन्दगद्गदपदं हरिरित्युवाच ॥ १ ॥

पद-अत्र॰ अंतरे॰ मसृणरोषवशाम् २ असीमनिःश्वासनिःसहमुखीम् २ सुमुखीम् २ उपेत्य॰ सव्रीडम् २ ईक्षितसखीवदनाम् २ दिनान्ते ७ सानन्दगद्गदपदम् २ हरिः इति॰ उवाच क्रि० ॥ २ ॥

योजना-अत्रान्तरे हरिः मसृणरोषवशामसीमनिःश्वासनिःसहमुखीं सव्रीडं यथा स्यात्तथा ईक्षितसखीवदनां सुमुखीम् ( राधाम् ) उपेत्य सानन्दगद्गदपदं यथा स्यात्तथा दिनान्ते इति उवाच ॥ १ ॥

**भाषार्थ**-इस अवसरपरश्रीकृष्णचंद्रजी दिनके अंत ( सायंकाल ) में कठोर क्रोधके वशीभूत और अत्यंत निरंतर जो श्वास उनके सहनेमें असमर्थ है मुख जिसका और लज्जित होकर देखा है सखीका मुख जिसने ऐसी सुंदरमुखी राधाजीके समीप जाकर आनंदसे गद्गद हैं पद जिसमें ऐसे इस वचनको बोलें ॥ १ ॥

## अथ एकोनविंशः प्रबन्धो देशवराडीरागेण अष्टतालीताले गीयते ॥ १९ ॥

**वदसि यदि किञ्चिदपि दन्तरुचिकौमुदी हरति दरतिमिरमतिघोरम्॥स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयति लोचनचकोरम् ॥ १ ॥**

**प्रिये चारुशीले प्रिये चारुशील मुञ्च मयि मानमनिदानम् ॥ सपदि मदनानलो दहति मम मानसं देहि मुखकमलमधुपानम् ॥ ध्रु० ॥ ४ ॥**

पद-वदसि क्रि० यदि॰ किञ्चित्॰ अपि॰ दन्तरुचिकौमुदी १हरति क्रि० दरतिमिरम् २ अतिघोरम् २ स्फुरदधरसीधवे ४ तव ६ वदनचन्द्रमाः १ रोचयति क्रि० लोचनचकोरम् २ प्रिये १ चारुशीले १

प्रिये १ चारुशीले १ मुञ्च क्रि० मयि ७ मानम् २ अनिदानम् २ सपदिऽ मदनानलः १ दहति क्रि० मम ६ मानसम् २ देहि क्रि० मुखकमलमधुपानम् ॥ २ ॥ १ ॥

योजना—हे चारुशीले हे प्रिये हे चारुशीले हे प्रिये राधे त्वं मयि अनिदानं मानं मुञ्च मदनानलः मम मानसं दहति अतः त्वं सपदि मुखकमलमधुपानं देहि हे राधे यदि ( यदा ) किंचित् अपि वदसि तदा तव दन्तरुचिकौमुदी अतिघोरं दरतिमिरं हरति तव वदनचन्द्रमाः स्फुरदधरसीधवे मम लोचनचकोरं रोचयति ॥ १ ॥

**भाषार्थ**—हे मनोहरआचरणवाली प्यारी राधे ! २ मेरेमें जो यह विना कारण मान है इसको त्यागो क्योंकि कामदेवकी अग्नि मेरे मनको दग्ध करती है इससे कमलरूप मुखारविंदके मधु ( सहत वा मदिरा ) के पानको दो और हे राधे जिस-समय आप कुछ भी कहती हो उस समय आपके जो दांतोंकी रुचिरूपकौमुदी ( चांदनी ) है वह अत्यंत घोर भयरूप अंधकारको नष्ट करती है और आपका मुखरूप चंद्रमा प्रकाश-मान अधरामृतपानके लिये मेरे चकोररूप नेत्रोंकी रुचिको पैदा करता है ॥ १ ॥

**सत्यमेवासि यदि सुदति मयि कोपिनी देहि खरनखरशरघातम् ॥ घटय भुजबन्धनं जनय रदखण्डनं येन वा भवति सुखजातम् ॥ २ ॥**

पद—सत्यम्ऽ एव असि क्रि० यदिऽ सुदति १ मयि ७ कोपिनी १ देहि क्रि० खरनखरशरघातम् २ घटय क्रि० भुजबन्धनम् २ जनय क्रि० रदखण्डनम् २ येन ३ वाऽ भवति क्रि० सुखजातम् ॥ १२ ॥

योजना—हे सुदति राधे यदि त्वं मयि सत्यम् एव कोपिनी असि

तर्हि खरनखरशरघातं देहि भुजबन्धनम् घटय रदखण्डनं जनय वा येन सुखजातं भवति तत् कुरु ॥ २ ॥

भाषार्थ--हे शोभगदंतवति राधे यदि आप मेरे ऊपर सत्यही कोपवाली हो तो अपने तीखे जो बाणरूप नख उनका प्रहार करो और उससे भी आपकी प्रसन्नता न होय तो भुजाओंसे बांधलो वा दांतोंसे खंडन ( घाव ) करो अथवा जिस मुष्टि आदिके मारनेसे आपको सुख हो वही करो क्यों कि राजा अपराधी मनुष्योंको ताडना बांधना छेदन आदिही दंडोंको देते हैं ॥ २ ॥

त्वमसि मम भूषणं त्वमसि मम जीवनं त्वमसि
मम भवजलधिरत्नम् ॥ भवतु भवतीह मयि
सततमनुरोधिनी तत्र मम हृदयमतियत्नम्॥८॥

पद—त्वम् १ असि क्रि० मम ६ भूषणम् १ त्वम् १ असि क्रि० मम ६ जीवनम् १ त्वम् १ असि क्रि० मम ६ भवजलधिरत्नम् १ भवतु क्रि० भवति १ इहऽ मयि ७ सततम्ऽ अनुरोधिनी १ तत्रऽ मम ६ हृदयम् १ अतियत्नम् १ ॥ ३ ॥

योजना—हे राधे त्वं मम भूषणम् असि त्वं मम जीवनम् असि त्वं मम भवजलधिरत्नम् असि इह मयि भवती सततम् अनुरोधिनी भवतु तत्र (अनुरोधे) मम हृदयम् अतियत्नं वर्तते तवानुकूल्यार्थम् अतीव यत्नं करोतीत्यर्थः ॥ ३ ॥

भाषार्थ—हे राधे आप मेरे प्राण हो आप मेरा भूषण हो और आप मेरा संसाररूपसमुद्रमें रत्न हो अर्थात् स्त्रियोंमें रत्न हो ऐसे मेरे विषय आप निरंतर अनुरोधिनी (अनुकूल)

हो क्योंकि उस आपके अनुकूल करनेमें मेरा हृदय अत्यंत यत्नसहित है अर्थात् अनुकूल करनेके लिये यत्न करता है ॥ ३ ॥

**नीलनलिनाभमपि तन्वि तव लोचनं धारयति कोकनदरूपम् ॥ कुसुमशरबाणभावेन यदि रंजयसि कृष्णमिदमेतदनुरूपम् ॥ ४ ॥**

पद—नीलनलिनाभम् १. अपिऽ तन्वि १ तव लोचनं १ धारयति क्रि० कोकनदरूपम् २ कुसुमशरबाणभावेन ३ यदि रञ्जयसि . क्रि० कृष्णं २ इदम् १ एतत् १ अनुरूपम् ॥ ४ ॥

योजना—हे तन्वि नीलनलिनाभम् अपि तव लोचनं कोकनदरूपं धारयति यदि इदं ( चक्षुः ) कृष्णं कुसुमशरबाणभावेन रञ्जयसि ( रक्तं करोषि ) तदा एतत् ( रक्तं रूपं ) अनुरूपं ( योग्यं ) भवति ॥ ४ ॥

**भाषार्थ**—हे तन्वि ( सूक्ष्मांगी ) राधे नीलकमलके समान है कांति जिसकी ऐसा यह आपका नेत्र रक्तकमलके रूपको धारण करता है अर्थात् क्रोधसे रक्त है यदि कामदेवके बाणों ( पुष्प ) से है उत्पत्ति जिसकी ऐसे मधु ( मदिरा ) के पीनेसे इस कृष्ण ( काले ) नेत्रको रक्त करती होय तो यह रक्त करना योग्य ( उचित ) है क्योंकि मधुके पीनेसे रक्तता उचित है ॥ ४ ॥

**स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी रञ्जयतु तव हृदयदेशम् ॥ रसतु रशनाऽपि तव घनजघनमण्डले घोषयतु मन्मथनिदेशम् ॥ ५ ॥**

पद–क्रि० कुचकुम्भयोः ६ उपरि ऽ मणिमञ्जरी १ रञ्जयतु क्रि० तव ६ हृदयदेशं २ रसतु क्रि० रशना १ अपि ऽ तव ६ घनजघनमण्डले ७ घोषयतु क्रि० मन्मथनिदेशम् ॥ ५ ॥

योजना--हे राधे मणिमञ्जरी कुचकुम्भयोः उपरि स्फुरतु तव हृदयदेशं रञ्जयतु तव रशना अपि घनजघनमण्डले रसतु मन्मथनिदेशं घोषयतु ( शब्दायताम् ) ॥ ५ ॥

भाषार्थ–हे राधे आपके हारकी लता कुचकलशोंके ऊपर शोभाको प्राप्त हो और फिर वह आपके वक्षःस्थलको अपनी किरणोंसे शोभित करो आपकी रशना (कौंदनी) भी भारी २ जंघाओंके मंडलमें शब्द करो और कामदेवकी आज्ञाका घोषण ( ढंढोरा ) करो यहां श्रीकृष्णजीने अपने वचनोंकी चतुराईसे विपरीतरति की सूचना की ॥ ५ ॥

स्थलकमलगञ्जनं मम हृदयरञ्जनं जनितरतिरङ्गपरभागम् ॥ भण मसृणवाणि करवाणि चरणद्वयं सरसलसदलक्तकसुरागम् ॥ ६ ॥

पद–स्थलकमलगञ्जनं २ मम ६ हृदयरञ्जनं २ जनितरतिरङ्गपरभागं २ भण क्रि० मसृणवाणि १ करवाणि क्रि० चरणद्वयं २ सरसलसदलक्तकसुरागम् ॥ २ ॥ ६ ॥

योजना–मसृणवाणि ( स्निग्धवचने ) राधे त्वं भण अहं स्थलकमलगञ्जनं मम हृदयरञ्जनं जनितरतिरङ्गपरभागं ते चरणद्वयं सरसलसदलक्तकसुरागं करवाणि ( कुर्याम् ) ॥ ६ ॥

भाषार्थ–हे कोमलवचनवाली राधे आप आज्ञा दो स्थलकमलके तुल्य मेरे हृदयको अनुराग ( प्रीति ) का दाता और पैदा किया है सुरतकी कुशलतामें संभोगकी परस्पर

शोभा जिसने ऐसे आपके दोनों चरणोंको रससहित ( गीला वा शृंगाररससे युक्त ) जैसे हो तैसे अलक्तके सुंदर रागवाले मैं करूं अर्थात् तेरे चरणोंमें महावर लगाऊं ॥ ६ ॥

**स्मरगरलखण्डनं मम शिरसि मण्डनं देहि पदपल्लव-मुदारम् ॥ ज्वलति मयि दारुणो मदनकदनानलो हरतु तदुपहितविकारम् ॥ ७ ॥**

पद—स्मरगरलखण्डनं २ मम ६ शिरसि ७ मण्डनं २ देहि क्रि० पदपल्लवम् २ उदारं २ ज्वलति क्रि० मयि ७ दारुणः १ मदनकदनानलः १ हरतु क्रि० तदुपहितविकारम् २ ॥ ७ ॥

योजना—हे राधे त्वं स्मरगरलखण्डनं मण्डनमुदारं पदपल्लवं मम शिरसि देहि मयि दारुणः मदनकदनानलः ज्वलति तदुपहितविकारं हरतु ( नाशयतु ) ॥ ७ ॥

**भाषार्थ**—हे राधे आप कामदेवके विषके नाशक और मेरे शिरके भूषण और मनोहर अपने चरणकमलको मेरे शिरपर रखो क्योंकि मेरे शरीरमें दारुण ( क्रूर ) कामदेवके दुःखकी अग्नि जलती है उस कामदेवसे पैदा हुए दुःखको आपका चरण हरो अर्थात् नष्ट करो शिरकी पीडाके नाशसे शरीरपीडाकी निवृत्ति होजायगी अथवा पत्तोंसे ढके हुए शिरपर कामरूप सूर्यका ताप नहीं होगा ॥ ७ ॥

**इति चटुलचाटुपटुचारु मुरवैरिणो राधिकामधि वचनजातम् ॥ जयति जयदेवकविभारतीभूषितं मानिनीजनजनितशातम् ॥ ८ ॥**

**इति श्रीगीतगोविन्दे एकोनविंशतितमः प्रबन्धः ॥ १९ ॥**

पद्–इति ऽ चटुलचाटुपटुचारु १ मुरवैरिणः ६ राधिकाम् २ अधि ऽ वचनजातम् १ जयति क्रि० जयदेवकविभारतीभूषितम् १ मानिनीजनजनितशातम् १ ॥ ८ ॥

योजना–मुरवैरिणः इति चटुलचाटुपटुचारु जयदेवकविभारतीभूषितं मानिनीजनजनितशातं राधिकामधि वचनजातम् जयति सर्वोत्कृष्टं भवतीत्यर्थः ॥ ८ ॥

**भाषार्थ**–इस प्रकार राधाजी देखकर कहे और प्रीतिसे युक्त चतुर और कोमल और जयदेव कविकी वाणीसे भूषित ( शोभायमान ) और मानवाली स्त्रियोंको सुखदायी यह श्रीकृष्णचंद्रजीके वचनोंका समूह जयको प्राप्त हो अर्थात् सबसे उत्तम है ॥ ८ ॥

इति श्रीगीतगोविंदभाषाविवृतौ एकोनविंशतितमः प्रबंधः १९ ॥

**परिहर कृतातङ्के शङ्कां त्वया सततं घनस्तनजघनयाऽऽक्रांते स्वान्ते परानवकाशिनि ॥ विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं स्तनभरपरीरम्भारम्भे विधेहि विधेयताम् ॥ १ ॥**

पद्–परिहर क्रि० कृतातङ्के १ शङ्काम् २ त्वया ३ सततं ऽ घनस्तनजघनया ३ आक्रान्ते ७ स्वान्ते ७ परानवकाशिनि ७ विशति क्रि० वितनोः ५ अन्यः १ धन्यः १ न ऽ कः १ अपि ऽ मम ६ अन्तरं ऽ स्तनभरपरीरम्भारम्भे ७ विधेहि क्रि० विधेयताम् २ ॥ १ ॥

योजना–हे कृतातङ्के ( कृतकोपे ) राधे त्वं शङ्कां परिहर ( त्यज ) स्वान्ते घनस्तनजघनया त्वया सततमाक्रान्ते परानवकाशिनि च सति वितनोः ( कामात् ) अन्यः कः अपि धन्यः जनः मम अन्तरम् न

विशति अतः स्तनभरपरीरंभारम्भे विधेयतां विधेहि ( कुरु ) ॥ १ ॥

भाषार्थ–हे कोपकरनेवाली राधे आप शंकाको त्याग दो क्योंकि कठिन हैं स्तन और जंघा जिसकी ऐसी आपसे व्याप्त ( भरे ) अन्यका नहीं है अवकाश जिसमें ऐसे मेरे अंतःकरणमें कामदेवसे अन्य कोईभी धन्यजन प्रवेश नहीं करता इससे हे प्यारी श्रीराधे जिससे मेरे अंतःकरणमें कामदेवसे अन्यका प्रवेश नहीं है इससे स्तनोंके भारसे स्पर्श करनेमें उद्योग करो अर्थात् मेरा आलिंगन करो ॥ १ ॥

**मुग्धे विधेहि मयि निर्दयदन्तदंशं दोर्वल्लिबन्धनिबिड-स्तनपीडनानि ॥ चण्डि त्वमेव मुदमञ्चय पञ्चबाण-चण्डालकाण्डदलनादसवः प्रयान्ति ॥ २ ॥**

पद–मुग्धे १ विधेहि क्रि० मयि ७ निर्दयदन्तदंशं २ दोर्वल्लि बन्धनिबिडस्तनपीडनानि २ चण्डि १ त्वम् १ एवऽ मुदम् २ अञ्चय क्रि॰पञ्चबाणचण्डालकाण्डदलनात् ५ असवः२ प्रयान्ति क्रि०॥२॥

योजना–हे मुग्धे राधे त्वं मयि निर्दयदन्तदंशं दोर्वल्लिबन्धनि-बिडस्तनपीडनानि विधेहि हे चण्डि त्वमेव मुदम् अञ्चय नो चेत् पञ्चबाणचण्डालकाण्डदलनात् मम असवः प्रयान्ति ॥ २ ॥

भाषार्थ–हे मूढे वा सुंदरि राधे आप मेरे अपराधके अनु-सार मेरे शरीरमें निर्दय होकर दांतोंके घावको और भुजा-रूपलताओंसे बांधने और दृढतासे स्तनोंसे पीडाको करो हे चंडि कोपवाली राधे आपही मेरे आनंदको पैदा करो अर्थात् मेरी प्रीति अन्य स्त्रीमें नहीं है जो आप मेरी प्रसन्नता न करेगी

तो चांडालरूपकामदेवके धनुषका जो घाव उससे मेरे प्राण जाते हैं इससे मेरे ऊपर प्रसन्न हो ॥ २ ॥

**शशिमुखि तव भाति भङ्गुरभ्रूर्युवजनमोहकरालकालसर्पी ॥ तदुदितभयभञ्जनाय यूनां त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ ३ ॥**

पद—शशिमुखि १ तव ६ भाति क्रि० भङ्गुरभ्रूः १ युवजनमोहकरालकालसर्पी १ तदुदितभयभञ्जनाय ४ यूनां ६ त्वदधरसीधुसुधा १ एवऽ सिद्धमन्त्रः १ ॥ ३ ॥

योजना—हे शशिमुखि राधे युवजनमोहकरालकालसर्पी तव भंगुरभ्रूः भाति ( शोभते ) यूनां तदुदितभयभञ्जनाय त्वदधरसीधुसुधा एव सिद्धमन्त्रः अस्तीति शेषः ॥ ३ ॥

भाषार्थ—हे चंद्रमाके तुल्य मुखवाली राधे युव ( जवान ) जनोंके मोहनार्थ भयंकर कालीनागिनके समान जो आपकी कुटिल भ्रुकुटी हैं वे शोभाको प्राप्त हो रही हैं और उस सर्पिणीसे पैदा हुए भयके नाशार्थ युवा मनुष्योंको आपके अधरोंकी अमृतके समान मदिरा ही सिद्धमंत्र है अर्थात् आपके अधरामृतके पानसेही कालसर्पिणीका विष दूर होसकता है इससे तेरे कोपसे डसे हुए मेरे जीवनको दो ॥ ३ ॥

**व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ॥ सुमुखि विमुखीभावं तावद्विमुञ्च न वञ्चय स्वयमतिशयस्निग्धो मुग्धे प्रियोऽहमुपस्थितः ॥ ४ ॥**

पद-व्यथयति क्रि० वृथाऽ मौनं १ तन्वि १ प्रपञ्चय क्रि० पञ्चमं २ तरुणि १ मधुरालापैः३तापम् २ विनोदय० क्रि० दृष्टिभिः ३ सुमुखि १ विमुखीभावं २ तावत्ऽ विमुञ्च क्रि० नऽ वञ्चय क्रि०स्वयम्ऽ अतिशयास्निग्धः १ मुग्धे १ प्रियः १ अहम् १ उपस्थितः १ ॥४॥

योजना-हे तन्वि राधे तव वृथा मौनं मां व्यथयति हे तरुणि त्वं मधुरालापैः पञ्चमं प्रपञ्चय दृष्टिभिः तापं विनोदय हे सुमुखि विमुखीभावं तावत् विमुञ्च हे मुग्धे अतिशयस्निग्धः अहं प्रियः स्वयम् उपस्थितः अतः मे वचनं त्वं न वञ्चय न उल्लंघस्व ॥ ४ ॥

**भाषार्थ**-हे सूक्ष्म अंगवाली राधे यह आपका वृथा मौन मुझे दुःख देता है इससे हे तरुणि आप मधुरवचनोंसे पंचमस्वरका उच्चारण करो और अपनी दृष्टियोंसे मनके दुःखोंको दूर करो और हे सुंदरमुखि प्रथम तो इस विमुखीभाव ( दुष्टदृष्टि ) को त्याग दो हे मुग्धे ( मूर्खिणी ) यह अत्यंत स्निग्ध ( कोमल ) प्यारा मैं स्वयंही प्राप्त हुआ हूं इससे मेरे वचनका अब लंघन मत करो अर्थात् स्वयं आये प्यारेका त्यागना उचित नहीं है ॥ ४ ॥

**बन्धूकद्युतिबान्धवोयमधरः स्निग्धो मधूकच्छविर्गण्डश्चण्डि चकास्ति नीलनलिनश्रीमोचनं लोचनम् ॥**
**नासाभ्येति तिलप्रसूनपदवीं कुंदाभदंति प्रिये प्रायस्त्वन्मुखसेवया विजयते विश्वं स पुष्पायुधः॥ ५ ॥**

पद-बन्धूकद्युतिबान्धवः १ अयम् १ अधरः १ स्निग्धः १ मधूकच्छविः १ गंडः १ चंडि १ चकास्ति क्रि० नीलनलिनश्रीमोचनम् १ लोचनम् १ नासा १ अभ्येति क्रि० तिलप्रसूनपदवीम् २

कुन्दाभदन्ति १ प्रिय १ प्रायः ऽ त्वन्मुखसेवया ३ विजयते क्रि० विश्वम् २ सः १ पुष्पायुधः १ ॥ ९ ॥

योजना- हे चंडि ( कोपवति ) राधे तव अयमधरः बन्धूकद्युतिबांधवः चकास्ति स्निग्धः गंडः मधूकच्छविः चकास्ति तव लोचनं नीलनलिनश्रीमोचनमस्ति तव नासा तिलप्रसूनपदवीमभ्येति हे कुंदाभदंति हे प्रिये प्रायः सः पुष्पायुधः ( कामदेवः ) त्वन्मुखसेवया विश्वं विजयते ॥ ९ ॥

भाषार्थ-हे चंडि कोपवाली राधे यह आपका अधर ओष्ठ बंधूक ( दुपहरिया ) पुष्पकी कांतिका बांधव ( तुल्य ) होकर शोभाको प्राप्त है और यह चिकना आपका कपोल मधूक ( महुआ ) के समान कांतिवाला शोभित हो रहा है और यह आपका नेत्र नीलकमलकी शोभाको दूर करता है अर्थात् नीलकमलसे उत्तम है और आपकी नासिका तिलके पुष्पोंकी पदकी तुल्यता को प्राप्त को होती है हे कुंदके समान दाँतोंवाली प्यारी राधे प्रायः ( बहुधा ) यह प्रतीत होता है कि वह पुष्पायुध ( कामदेव ) आपके मुखकी सेवासेही विश्वका विजय करता है क्योंकि जो कामदेवके पुष्परूप आयुध हैं वे ( बंधूक, मधूक, नीलकमल, तिल, कुंद पुष्प आदि ) तेरे मुखमहा वर्तमान हैं ॥ ९ ॥

दृशौ तव मदालसे वदनमिन्दुमत्यान्वितं गतिर्जनमनोरमा विधुतरम्भमूरुद्वयम् ॥ रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवावहो विबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ १० ॥

पद–दृशौ १ तव ६ मदालसे १ वदनम् १ इंदुमत्या ३ अन्वितं १ गतिः १ जनमनोरमा १ विधुतरम्भम् १ ऊरुद्वयं १ रतिः १ तव ६ कलावती १ रुचिरचित्रलेखे १ भ्रुवौ १ अहोऽ विबुधयौवतं २ वहसि क्रि० तन्वि १ पृथ्वीगता १ ॥ ६ ॥

योजना–हे तन्वि राधे यतः तव दृशौ मदालसे स्तः ते वदनम् इंदुमत्या अन्वितम् अस्ति ते गतिः जनमनोरमा अस्ति ते ऊरुद्वयं विधुतरम्भम् अस्ति तव रतिः कलावती वर्तते ते भ्रुवौ रुचिरचित्रलेखे स्तः अहो इत्याश्चर्ये अतः पृथ्वीगता अपि त्वं विबुधयौवतं वहसि ( धारयसि ) ॥ ६ ॥

**भाषार्थ**--हे सूक्ष्म अंगवाली राधे जिससे आपके नेत्र मदसे अलस ( आलस्यसे युक्त ) हैं और आपका मुख इंदु ( चंद्र ) की मतिसे युक्त है अर्थात् चंद्रमाकी तुल्य है और आपकी गति जनोंको मनोरम है आपकी दोनों जंघा रंभा ( केला ) का तिरस्कार करती हैं और आपकी रति ( गमन ) कला-वती है अर्थात् कामदेवकी कलामें कुशल है और आपकी दोनों भ्रुकुटा शोभायमान चित्रलेखाके समान हैं इस प्रकार पदोंकी योजनासे मदालसा, इंदुमति, मनोरमा, रंभा, कलावती, चित्रलेखा, हैं नाम जिनके ऐसी अप्सरा दिखाई इससे आश्चर्य है कि पृथिवापर स्थित भी आप देवताओंकी युवतियोंका जो समूह है उसको धारण करती हो अर्थात् एक भी आपमें संपूर्ण अप्सराओंके गुण वर्तते हैं ॥ ६ ॥

प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधा-पीनपयोधरस्मरणकृत्कुम्भेन सम्भेदवान् ॥ पत्रे

विभ्यति मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामो-
हेन जितं जितं जितमभूद्व्यालोलकोलाहलः ॥ ७ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे महाकाव्ये मानिनीवर्णने चतुरचतुर्भुजो नाम दशमः सर्गः ॥१०॥

पद-प्रीतिम् २ वः ६ तनुताम् क्रि०हरिः १ कुवलयापीडेन ३ सार्धंऽ रणे ७ राधापीनपयोधरस्मरणकृत् १ कुंभेन ३ संभेदवान् १ पत्रे ७ बिभ्यति ७ मीलति ७ क्षणम् २ अपिऽ क्षिप्रम्ऽ तदालोक-नात् ५ व्यामोहेन ३ जितम् १ जितम् १ जितम् १ अभूत् क्रि० व्यालोलकोलाहलः १ ॥ ७ ॥

योजना-कुवलयापीडेन सार्द्धं रणे कुंभेन संभेदवान् राधापीन-पयोधरस्मरणकृत् हरिः ( कृष्णः ) वः ( गायतां शृण्वतां ) प्रीतिं तनुताम् विस्तारयतु यतः पत्रे ( कुवलयापीडवाहने ) बिभ्यति क्षणम् अपि मीलति ( मृते ) सति व्यामोहेन जितं जितं जितम् इति तदालोकनात् क्षिप्रं व्यालोलकोलाहलः अभूत् कंसो बालेन जितः इति सर्वैर्जनैः कलकलशब्दः कृतः इत्यर्थः । मानिनमितिपद-दानेनात्र चतुरश्चतुर्भुजः कृष्णो ज्ञेयः ॥ ७ ॥

भाषार्थ-संग्राममें कुवलयापीडहस्तिके संग कुंभ (गंडस्थल) में सूंडसे बँधे हुए और कुंभके तुल्य राधाजीके पीन ( पुष्ट ) स्तनोंके स्मरण करनेवाले हरि ( कृष्णजी ) तुम सुनने और गानेवालोंकी प्रीतिको विस्तारो अर्थात् अधिक प्रसन्नता करो और जिस समय कुवलयापीडपत्र ( वाहन ) को भय हुआ और वह क्षणमात्रमें मरगया तब शीघ्र ही भ्रमसे बालकने कंसको जीत लिया यह चंचलकोलाहल हुआ अर्थात् हस्तिके पराजय होनेपरभी कंसका पराजय सब मनुष्योंके

मुखसे निकसा यहां वचनकी कुशलतासे स्त्रियोंको मान देनेसे चतुरचतुर्भुज कृष्णचंद्र हैं ॥ ७ ॥

इति श्रीगीतगोविंदे पं० मिहिरचन्द्रकृतभाषाविवृतिसहिते महाकाव्ये मानिनीवर्णने चतुरचतुर्भुजो नाम दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ११.

**सुचिरमनुनयेन प्रीणयित्वा मृगाक्षीं गतवति कृतवेषे केशवे कुञ्जशय्याम्॥ रचितरुचिरभूषां दृष्टिमोषे प्रदोषे स्फुरति निरवसादां काऽपि राधां जगाद ॥ १॥**

पद–सुचिरम् २ अनुनयेन ३ प्रीणयित्वा मृगाक्षींऽ २ गतवति ७ कृतवेषे ७ केशवे ७ कुञ्जशय्याम् २ रचितरुचिरभूषाम् २ दृष्टिमोषे ७ प्रदोषे ७ स्फुरति ७ निरवसादाम् २ का १ अपिऽ राधाम् २ जगाद क्रि० ॥ १ ॥

योजना–अनुनयेन सुचिरं मृगाक्षीं प्रीणयित्वा कृतवेषे केशवे कुञ्जशय्यां गतवति सति दृष्टिमोषे प्रदोषे स्फुरति सति रचितरुचिरभूषां निरवसादाम् राधां का अपि सखी जगाद वक्ष्यमाणवचनम् ॥ १ ॥

**भाषार्थ**–प्रीतिके वचनोंसे चिरकालतक मृगनयना राधाजीको प्रसन्न करनेके अनंतर शृंगारका अलंकार करके जब केशव ( कृष्ण ) जी कुंजभवनकी शय्यापर चलेगये और दृष्टिसे नहीं दीखे जिसमें ऐसे प्रदोषके समयका प्रकाश होनेपर कोई राधाजीकी सखी रची है मनोहर भूषा ( अलंकार ) जिसने ऐसी निरवसादा दुःखसे रहित राधाजीको बोली

अर्थात् श्रीकृष्णजीके समीप गमनके लिये कहने लगी ॥ १ ॥

अथ विंशः प्रबन्धो वसंतरागेण रूपक-
तालेगीयते ॥ २० ॥

विरचितचाटुवचनरचनं चरणरचितप्रणिपातम् ॥
सम्प्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुयातम् ॥
मुग्धे मधुमथनमनुगतमनुसर राधिके ॥ ध्रु० ॥

पद-विरचितचाटुवचनरचनं २ चरणरचितप्रणिपातं २ संप्रति ऽ मंजुलवंजुलसीमनि ७ केलिशयनम् २ अनुयातम् २ मुग्धे १ मधुमथनम् २ अनुगतम् २ अनुसर क्रि० राधिके १ ॥ १ ॥

योजना-हे मुग्धे राधिके विरचितचाटुवचनरचनं चरणरचितप्रणिपातं संप्रति मञ्जुलवञ्जुलसीमनि केलिशयनं त्वम् अनुयातम् अनुगतं मधुमथनम् अनुसर ॥ १ ॥

भाषार्थ--हे मुग्धे राधे कहे हैं प्यारे अनेक वचन जिन्होंने और तेरे चरणोंमें किया है प्रमाण जिन्होंने और जो श्रीकृष्ण इस समयमें कोमल वेतकी कुञ्जके अंतमें क्रीडाकी शय्यापर गये हैं और आपके अनुकूल हैं ऐसे मधुमथन ( मधु दैत्यके नाशक श्रीकृष्ण ) के समीप चलो अर्थात् प्यारेकी क्रीडाशय्यापर आपका गमन करना योग्य है ॥ १ ॥

घनजघनस्तनभारभरे दरमन्थरचरणविहारम् ॥ मुखरितमणिमञ्जीरमुपैहि विधेहि मरालविहारम् ॥ २ ॥

पद-घनजघनस्तनभारभरे १ दरमन्थरचरणविहारम् २ मुखरितमणिमञ्जीरम् २ उपैहि क्रि० विधेहि क्रि० मरालविहारम् ॥ २ ॥

योजना-हे घनजघनस्तनभारभरे राधे त्वं दरमन्थरचरणविहारं

मुखरितमणिमञ्जीरं यथा स्यात्तथा कृष्णम् उपेहि अत एव मराल-
विहारं विधेहि ( कुरु ) ॥ २ ॥

भाषार्थ–हे पुष्ट जो जंघा और स्तन उनके भारकी अधिक-
तावाली राधे आप मंद २ चरणोंको रखती और मणिजटित
चरणोंके मंजीरोंकी बजाती हुई उस कृष्णके समीप चलो और
इसीसे राजहंसोंके विलास ( लीला ) को करो अर्थात् हंसके
समान गमनसे आपका कृष्णके समीप जाना योग्य है ॥ २ ॥

**शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम् ॥ कुसुम-
शरासनशासनवन्दिनि पिकनिकरे भज भावम् ॥ ३ ॥**

पद–शृणु क्रि० रमणीयतरं २ तरुणीजनमोहनमधुरिपुरावम् २
कुसुमशरासनशासनवन्दिनि ७ पिकनिकरे ७ भज क्रि० भावम् २ ॥ ३ ॥

योजना–रमणीयतरं तरुणीजनमोहनमधुरिपुरावं त्वं शृणु पिक-
निकरे कुसुमशरासनशासनवन्दिनि सति त्वं कृष्णे भावं भज ॥ ३ ॥

भाषार्थ–हे राधे अत्यंतरमणीय( मनोहर )तरुणी स्त्रियोंके
मोहकरनेवाले श्रीकृष्णचंद्रजीकी वंशीके शब्दको आप सुनो
और जब कोकिलोंका समूह कामदेवकी आज्ञाकी स्तुति
करने लगे तब आप श्रीकृष्णचंद्रजीमें प्रीतिको करियो क्योंकि
कोकिल यह शब्द कहा करते हैं कि हे मानवाली स्त्रियो तुम
मानको त्याग कर अपने २ पतियोंका सेवन करो ॥ ३ ॥

**अनिलतरलकिसलयनिकरेण करेण लतानिकु-
रम्बम् ॥ प्रेरणमिव करभोरु करोति गतिं प्रति
मुञ्च विलम्बम् ॥ ४ ॥**

पद—अनिलतरलकिसलयनिकरेण २ करेण २ लतानिकुरम्बम् १ प्रेरणम् २ इव॰ करभोरु १ करोति क्रि॰ गतिम् २ प्रति॰ मुञ्च क्रि॰ विलम्बम् २ ॥ ४ ॥

योजना—हे करभोरु राधे लतानिकुरम्बम् अनिलतरलकिसलय-निकरेण करेण गतिं प्रति तव प्रेरणम् इव करोति अतः त्वं गमने विलम्बं मुञ्च ( त्यज ) ॥ ४ ॥

**भाषार्थ**—हे करभोरु अर्थात् कनिष्ठासे मणिबंधतक हाथके बाहिरके अग्रभागकी तुल्य हैं जङ्घा ( बालोंसे शून्य ) जिसकी ऐसी आप गमन करनेमें विलंब मत करो क्योंकि यह लता-ओंका समूह भी पवनसे चंचल अपने पत्तोंके समूहरूप हाथसे गमनके लिये आपकी प्रेरणा करता है अर्थात् अचेतन लता भी आपको प्रेरती है इससे विलंब करना अयोग्य है ॥ ४ ॥

**स्फुरितमनङ्गतरङ्गवशादिव सूचितहरिपरिरम्भम् ॥**
**पृच्छ मनोहरहारविमलजलधारममुं कुचकुम्भम् ॥५॥**

पद—स्फुरितम् २ अनङ्गतरङ्गवशात् ५ इव॰ सूचितपरिरम्भम् २ पृच्छ क्रि॰ मनोहरहारविमलजलधारम् २ अमुम् २ कुचकुंभम् २॥ ५

योजना—हे श्रीराधे अनङ्गतरङ्गवशात् स्फुरितम् इव सूचितहरि-परिरम्भं मनोहरहारविमलजलधारम् अमुं कुचकुम्भं त्वं पृच्छ ॥ ५॥

**भाषार्थ**—हे श्री राधे कामदेवकी तरंगोंके वशसे कंपते और श्रीकृष्णचंद्रजीके संभोगको सूचित करते और मनोहर हाररूप है निर्मल जलकी धारा जिसमें ऐसे इन अपने कुम्भ ( घट ) के समान स्तनोंको आप पूछो अर्थात् आपके कुचकुंभके कंपनेसे भी संगम प्रतीत होता है ॥ ५ ॥

अधिगतमखिलसखीभिरिदं तव वपुरपि रतिरण-
सज्जम्॥ चण्डि रसितरशनारवडिण्डिममभिसरसर-
समलज्जम् ॥ ६ ॥

पद–अधिगतम् २ अखिलसखीभिः ३ इदम् १ तव ६ वपुः १ अपिऽ रतिरणसज्जम् १ चण्डि १ रसितरशनारवडिंडिमम् २ अभि-सर क्रि॰सरसम् २ अलज्जम् २ ॥ ६ ॥

योजना–हे चंडि अत्यन्तकोपवति राधे अखिलसखीभिः इदं तव वपुः अपि रतिरणसज्जम् अधिगतम् ( ज्ञातम् ) अतः रसितरशनारव-डिण्डि सरसम् अलज्जं यथा स्यात्तथा त्वं कृष्णम् अभिसर (गच्छ)६

भाषार्थ--हे अत्यंतकोपवाली राधे यह आपका शरीर भी कामक्रीडाके संग्रामार्थ सन्नद्ध ( तैयार ) संपूर्ण सखियोंने जान लिया है इससे शब्द करतीहुई रशना ( कोंदनी ) का शब्द ही बाजा जिसमें और उत्कंठा ( उत्साह ) और लज्जाका त्याग जिसमें हो ऐसी रीतिसे आप श्रीकृष्णचंद्रजीके समीप अर्थात् गाजेबाजेसे संग्राममें चलो ॥ ६ ॥

स्मरशरसुभगनखेन सखीमवलम्ब्य करेण सलीलम्॥
चल वलयक्कणितैरवबोधय हरिमपि निजगति-
शीलम् ॥ ७ ॥

पद–स्मरशरसुभगनखेन ३ सखीम् २ अवलंब्यऽ करेण ३ सलीलम् २ चल क्रि॰ वलयक्कणितैः ३ अवबोधय क्रि॰ हरिम् २ अपिऽ निजगतिशीलम् २ ॥ ७ ॥

योजना–हे श्रीराधे स्मरशरसुभगनखेन करेण सलीलं यथा स्यात् तथा त्वं चल निजगतिशीलम् हरिम् अपि वलयक्कणितैः अवबोधय स्वस्याः आगमनं ज्ञापयेत्यर्थः ॥ ७ ॥

भाषार्थ–हे राधे कामदेवके बाणरूप हैं सुंदर नख जिसमें ऐसे हाथसे लीलासहित सखीका स्पर्श करके आप चलो और अपने कंकणोंके शब्दोंसे कामदेवमें है मन जिनका ऐसे श्रीकृष्णचंद्रजीको अपना आगमन बोधन करो अर्थात् मैं आई यह जताओ ॥ ७ ॥

श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ॥ हरिविनिहितमनसामधितिष्ठतु कण्ठतटीमविरामम् ॥ ८ ॥
इति श्रीगीतगोविन्दे विंशतितमः प्रबंधः ॥ २० ॥

पद–श्रीजयदेवभणितम् १ अधरीकृतहारम् १ उदासितवामम् १ हरिविनिहितमनसाम् ६ अधितिष्ठतु क्रि० कंठतटीम् २ अविरामम् २

योजना–अधरीकृतहारम् उदासितवामम् श्रीजयदेवभणितं हरिविनिहितमनसां कण्ठतटीम् अविरामं यथा स्यात्तथा अधितिष्ठतु ॥ ८ ॥

भाषार्थ–अपने गुणोंसे किया है हारका तिरस्कार जिसने और उदासीन की है वामा ( सुंदरी ) जिसने ऐसा यह जयदेवकविका कथन जिनका मन हरिके विषय वर्तमान है उनके कंठतटमें सदैव वास करो अर्थात् वे इसको सदैव पढैं ८ ॥

इति श्रीगीतगोविन्दे विंशतितमः प्रबंधः ॥ २० ॥

सा मां द्रक्ष्यति वक्ष्यति प्रियकथां प्रत्यङ्गमालिङ्गनैः प्रीतिं यास्यति रंस्यते सखि समागम्येति चिन्ताकुलः ॥ स त्वां पश्यति वेपते पुलकयत्यानन्दति स्विद्यति प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुञ्जे निकुञ्जे प्रियः ॥ १ ॥

पद-सा १ मां २ द्रक्ष्यति क्रि०वक्ष्यति क्रि०प्रियकथां २ प्रत्यङ्गम् २ आलिङ्गनैः३प्रीतिं २ यास्यति क्रि०रंस्यते क्रि०सखि १ समागम्य० इति० चिन्ताकुलः १ सः १ त्वां २ पश्यन्ति क्रि०वेपते क्रि०पुलकयति क्रि० आनन्दति क्रि० स्विद्यति क्रि०प्रत्युद्गच्छति क्रि० मूर्च्छति क्रि०स्थिरतमःपुञ्जे ७ निकुञ्जे ७ प्रियः १ ॥ १ ॥

योजना-हे सखि (श्रीराधे) सा राधा समागम्य मां द्रक्ष्यति प्रियकथां वक्ष्यति प्रत्यङ्गम् आलिङ्गनैः प्रीतिं यास्यति मया सह रंस्यते इति चिंताकुल सः प्रियः (कृष्णः) स्थिरतमःपुञ्जे निकुञ्जे त्वां पश्यति वेपते पुलकयति आनन्दति स्विद्यति प्रत्युद्गच्छति मूर्च्छति १॥

भाषार्थ-हे सखि (श्रीराधे) वह प्यारे श्रीकृष्णचंद्रजी स्थिरअंधकारके समूहसे पूर्ण कुंजमें इस प्रकार चिंतासे व्याकुल होकर कि वह श्रीराधा मिलकर मुझे अनुकूल दृष्टिसे देखेंगी और देखकर मनोहर कथा कहेंगी और कथा कहनेके अनंतर अंग २ का आलिंगन (संग) करेंगी फिर आलिंगनसे प्रसन्न होगी और मेरे संग क्रीडा करेंगी अर्थात् इस प्रकार मनोरथ करतेहुए श्रीकृष्णचंद्रजी आपको ध्यानसे देखते हैं और ध्यानमें देखकर भी क्या यह राधाजी कटु वचन कहेंगी वा मधुर, इससे कंपित हैं, अंगोंमें रोमांचित होते हैं अर्थात् ध्यानकेही आलिंगनसे उनके रोमांच खडे होते हैं और आनंदको प्राप्त होते हैं और ध्यानकेही आलिंगनसे खेद (पसीना) से युक्त होते हैं और ध्यानकी क्रीडा करके जब आप चलने लगी तब प्रति उत्थान करते हैं अर्थात् उठकर चलते हैं और ध्यानके डिगनेपर आपको न देखा मूर्च्छाको प्राप्त होते हैं

तात्पर्य यह है कि आपकेही ध्यानमें लगे जो श्रीकृष्णचंद्र हैं उनके समीप आपका गमन उचित है ॥ १ ॥

अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिच्छगुच्छावलिं
मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम् ॥
धूर्तानामभिसारसत्वरहृदां विष्वङ्निकुञ्जे सखि ध्वान्तं
नीलनिचोलचारु सुदृशां प्रत्यङ्गमालिङ्गति ॥ २ ॥

पद--अक्ष्णोः ७ निक्षिपत् १ अञ्जनं १ श्रवणयोः ७ तापिच्छगुच्छावलिं २ मूर्ध्नि ७ श्यामसरोजदाम २ कुचयोः ७ कस्तूरिकापत्रकं २ धूर्तानां ६ अभिसारसत्वरहृदाम् ६ विष्वङ्ऽनिकुञ्जे ७ सखि १ ध्वान्तं १ नीलनिचोलचारु १ सुदृशां ६ प्रत्यङ्गम् २ आलिङ्गति क्रि० ॥ २ ॥

योजना--हे सखि ( श्रीराधे ) नीलनिचोलचारु ध्वान्तं धूर्तानां विष्वक् निकुञ्जे अभिसारसत्वरहृदां सुदृशाम् अक्ष्णोः अञ्जनं श्रवणयोः तापिच्छगुच्छावलिं मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम्, निक्षिपत् सत् प्रत्यङ्गम् आलिङ्गति ( स्पृशति ) ॥ २ ॥

**भाषार्थ**--हे सखि श्रीराधे श्यामवस्त्रके समान सुंदर अंधकार धूर्त ( वंचक ) और संपूर्ण कुंजोंमें अभिसार ( संकेतका स्थलमें जानेकी शीघ्रतासे युक्त है मन जिनका अर्थात् साहसयुक्त मनवली जो सुंदरनेत्रवती है उनके नेत्रोंमें अंजनको कानोंमें तमालपुष्पके गुच्छोंको शिरपर श्याम कमलोंकी मालाको और कुचोंपर कस्तूरीके पत्रोंको रखता हुआ उनके अङ्ग २ का स्पर्श करता है तात्पर्य यह है कि अंधकारमें भूषणआदिकी

भी आवश्यकता नहीं है और न कोई रोकनेवाला है इससे आपका श्रीकृष्णचंद्रजीके समीप चलना उचित है ॥ २ ॥

**काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितो मणिमञ्जरीभिः ॥ एतत्तमालदलनीलतमं तमिस्रं तत्प्रेमहेमनिकषोपलतां तनोति ॥ ३ ॥**

पद—काश्मीरगौरवपुषाम् ६ अभिसारिकाणाम् ६ आबद्धरेखम् १ अभितः॰ मणिमञ्जरीभिः ३ एतत् १ तमालदलनीलतमम् १ तमिस्रम् १ तत्प्रेमहेमनिकषोपलताम् २ तनोति क्रि॰ ॥ ३ ॥

योजना—काश्मीरगौरवपुषाम् अभिसारिकाणां मणिमञ्जरीभिः अभितः आबद्धरेखं तमालदलनीलतमम् एतत् तमिस्रं तत्प्रेमहेम-निकषोपलतां तनोति ॥ ३ ॥

**भाषार्थ**—हे राधे केशरके समान गौर ( पीला ) है शरीर जिनका ऐसी जो अभिसारिका हैं अर्थात् प्यारेके लिये संकेतस्थानमें जानेवाली हैं उनकी मणियोंकी किरणोंसे चारों तरफ कीहैं रेखा जिसमें ऐसे यह तमालपत्रके समान अत्यंत नील अंधकार अभिसारिकास्त्रियोंके सुवर्णरूपप्रेमका निकषोपल ( कसोटी ) भावको विस्तारता है अर्थात् निकषोपलसा प्रतीत होता हैं तात्पर्य यह है कि अभिसारिकाओंके प्रेमकी परीक्षा अंधकारमें गमनसे ही होती है ॥ ३ ॥

**हारावलीतरलकाञ्चनकाञ्चिदामकेयूरकङ्कणमणिद्युति-दीपितस्य ॥ द्वारे निकुञ्जनिलयस्य हरिं निरीक्ष्य व्रीडावतीमथ सखी निजगाद राधाम् ॥ ४ ॥**

पद—हारावलीतरलकाञ्चनकाञ्चिदामकेयूरकङ्कणमणिद्युतिदीपितस्य

६ द्वारे ७ निकुंजनिलयस्य ६ हरिं २ निरीक्ष्य ऽ व्रीडावतीम् २ अथऽ सखी १ निजगाद क्रि० राधाम् ॥ २ ॥ ४ ॥

योजना-अथ ( अनन्तरं ) सखी हारावलीतरलकाञ्चनकाञ्चिदाम केयूरकङ्कणमणिद्युतिदीपितस्य निकुञ्जनिलयस्य द्वारे हरिं निरीक्ष्य व्रीडावतीं राधाम् निजगाद ( उवाच ) ॥ ४ ॥

**भाषार्थ**-इसके अनंतर मोतियोंका हार और सुवर्णकी कांची ( कोंदनी ) की माला और केयूर ( बाजूबंद ) कंकण इनमें जटित मणियोंकी कांतिसे प्रकाशित जो कुंजभवनका द्वार उसपर खडेहुए श्रीकृष्णचंद्रजीको देखकर लज्जावती अर्थात् मैं कितने २ कठोर वचन श्रीकृष्णचन्द्रजीको कहे हैं इससे लज्जित श्रीराधाजीको सखी ये वचन बोली ॥ ४ ॥

## अथ एकविंशतितमः प्रबन्धो वराडीरागेण आडवताले गीयते ॥ २१ ॥

**मञ्जुतरकुञ्जतलकेलिसदने ॥ प्रविश राधे माधव-समीपम् ॥ इह विलस रतिरभसहासितवदने ॥ १ ॥**

पद-मञ्जुतरकुञ्जतलकेलिसदने ७ प्रविश क्रि० राधे १ माधव-समीपम् २ इहऽ विलस क्रि० रतिरभसहासितवदने १ ॥ १ ॥

योजना-हे श्रीराधे हे रतिरभसहासितवदने त्वं मञ्जुतरकुञ्जतलके-लिसदने इह माधवसमीपं प्रविश विलस ॥ १ ॥

**भाषार्थ**-हे रतिके उत्साहसे हँसीसे युक्त मुखारविन्दवाली हे राधे इस मनोहर कुंजवाले क्रीडाके घरमें प्रवेश करो और विलास करो ॥ १ ॥

**नवभवदशोकदलशयनसारे ॥ प्रविश० ॥**
**कुचकलशतरलहारे ॥ २ ॥**

पद–नवभवदशोकदलशयनसारे ७ प्रविश क्रि० कुचकलशतरलहारे १ ॥ २ ॥

योजना–हे कुचकलशतरलहारे श्रीराधे नवभवदशोकदलशयनसारे क्रीडागृहे त्वं प्रविश विलस ॥ २ ॥

**भाषार्थ**–हे कलशके समान कुचोंपर चंचलहारवाली राधे ! नवीन अशोकके पत्तोंसे की है शय्या जिसमें ऐसे क्रीडा गृहमें प्रवेश करो और विलास करो ॥ २ ॥

**कुसुमचयरचितशुचिवासगेहे ॥ प्र० ॥**
**कुसुमसुकुमारदेहे ॥ ३ ॥**

पद–कुसुमचयरचितशुचिवासगेहे ७ प्र० कुसुमसुकुमारदेहे १ । ३

योजना–हे कुसुमसुकुमारदेहे श्रीराधे त्वं कुसुमचयरचितशुचिवासगेहे क्रीडागृहे प्रविश विलस ॥ ३ ॥

**भाषार्थ**–हे पुष्पोंके समान कोमल देहवाली राधे ! पुष्पोंके समूहसे रचा है शुद्ध वसनेका गृह जिसमें ऐसे क्रीडागृहमें आप प्रवेश कर विलास करो ॥ ३ ॥

**मृदुचलमलयपवनसुरभिशीते ॥ प्र० ॥**
**रसवलितललितगीते ॥ ४ ॥**

पद–मृदुचलमलयपवनसुरभिशीते ७ प्र० रसवलितललितगीते १॥४

योजना–हे रसवलितललितगीते राधे मृदुचलमलयपवनसुरभिशीते क्रीडागृहे त्वं प्रविश विलस ॥ ४ ॥

**भाषार्थ**–हे शृंगाररससहितमनोहरगीतवाली राधे ! आप

कोमल चंचल मलयागिरिके पवनसे सुगंधित और शीतल क्रीडाके गृहमें प्रवेश करो और विलास करो ॥ ४ ॥

विततबहुवल्लिनवपल्लवघने ॥ प्र० ॥
चिरमिलितपीनजघने ॥ ५ ॥

पद–विततबहुवल्लिनवपल्लवघने ७ प्र० चिरमिलितपीनजघने १॥५

योजना–हे चिरमिलितपीनजघने श्रीराधे त्वं विततबहुवल्लिनवपल्लवघने गृहे प्रविश विलस ॥ ५ ॥

भाषार्थ–हे चिरकालसे मिली हैं पुष्ट जंघा जिसकी ऐसी राधे ! आप विस्तारको प्राप्त हुई अनेक वल्लियोंके नवे पत्तोंसे सघन क्रीडाके गृहमें प्रवेश करो और विलास करो ॥ ५ ॥

मधुमिलितमधुपकुलकलितरावे ॥
प्र० ॥ मदनरभसरसभावे ॥ ६ ॥

पद–मधुमिलितमधुपकुलकलितरावे७ प्र० मदनरभसरसभावे १ ॥६

योजना–हे मदनरभसरसभावे श्रीराधे त्वं मधुमिलितमधुपकुलकलितरावे क्रीडागृहे प्रविश विलस ॥ ६ ॥

भाषार्थ–हे कामदेवके वेगसे उत्पन्न शृंगाररसमें प्रीतिवाली राधे आप पुष्पोंके मधुमें इकट्ठे हुए भ्रमरोंका मनोहर है शब्द जिसमें ऐसे क्रीडाके गृहमें प्रवेश करो और विलास करो॥ ६॥

मधुतरलपिकनिकरनिनदमुखरे ॥
प्र० ॥ दशनरुचिरुचिराशिखरे ॥ ७ ॥

पद–मधुतरलपिकनिकरनिनदमुखरे ७ प्र० दशनरुचिरुचिराशिखरे १ ॥ ७ ॥

योजना—हे दशनरुचिरुचिरशिखरे राधे त्वं मधुतरलपिककनिकरनिनदमुखरे क्रीडागृहे प्रविश विलस ॥ ७ ॥

भाषार्थ—हे दाँतोंकी कांतिसे शोभायमान है शिखरमणि जिसकी ऐसी श्रीराधे! वसंतऋतुसे चंचलकोकिलोंके समूहका है शब्द जिसमें ऐसे क्रीडाके गृहमें प्रवेश करो और विलास करो ॥ ७ ॥

विहितपद्मावतीसुखसमाजे ॥ कुरु मुरारे मंगलशतानि
भणति जयदेवकविराजराजे ॥ ८ ॥

इति श्रीगीतगोविन्दे एकविंशतितमः प्रबन्धः ॥२१॥

पद—विहितपद्मावतीसुखसमाजे ७ कुरु क्रि०मुरारे १ मंगलशतानि २ भणति ७ जयदेवकविराजराजे ७ ॥ ८ ॥

योजना—हे मुरारे त्वं विहितपद्मावतीसुखसमाजे जयदेवकविराजराजे भणति सति मंगलशतानि कुरु ॥ ८ ॥

भाषार्थ—हे मुरारे! श्रीकृष्णचंद्रजी! आप किया है अपनी पद्मावती स्त्रीको सुखका समूह जिसने और वर्णन किये हैं आपके गुण जिसने ऐसे जयदेवकविराजके लिये सैकडों मंगल करो ॥

इति श्रीगीतगोविन्दे एकविंशतितमः प्रबन्धः ॥ २१ ॥

त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं तापितः
कन्दर्पेण च पातुमिच्छति सुधासंबाधबिम्बाधरम् ॥
अस्याङ्कं तदलङ्कुरु क्षणमिह भ्रूक्षेपलक्ष्मीलवक्रीते
दास इवोपसेवितपदांभोजे कुतः संभ्रमः ॥ १ ॥

पद—त्वां २ चित्तेन ३ चिरं॰ वहन् १ अयम् १ अतिश्रान्तः १

भृशम्ऽ तापितः १ कंदर्पेण ३ चऽ पातुम्ऽ इच्छति क्रि०सुधासंबाध-बिम्बाधरम् २ अस्य ६ अङ्कम् २ तत्ऽ अलङ्कुरु क्रि० क्षणम् २ इहऽ भ्रूक्षेपलक्ष्मीलवक्रीते ७ दासे ७ इवऽ उपसेवितपदाम्भोजे ७ कुतःऽ संभ्रमः १ ॥ १ ॥

योजना-हे राधे त्वां चिंतन चिरं वहन् अतिश्रान्तः च पुनः कंदर्पेण भृशम् तापितः अयम् श्रीकृष्णः सुधासंबाधबिम्बाधरम् पातुम् इच्छति तत् तस्मात् त्वम् अस्य अङ्कम् क्षणम् अलङ्कुरु भ्रूक्षेप-लक्ष्मीलवक्रीते दासे इव उपसेवितपदांभोजे अस्मिन् श्रीकृष्णे तव संभ्रमः कुतः ॥ १ ॥

**भाषार्थ**-हे राधे ! चिरकालसे अपने मनमें आपका स्थापन करतेहुए और कामदेवसे अत्यंतपीडित श्रीकृष्णचंद्रजी अमृतसे पूर्ण आपके बिम्बाधरका पान किया चाहते हैं तिससे आप इन श्रीकृष्णचंद्रजीके अङ्कको क्षणमात्र शोभित करो अर्थात् गोदीमें बैठो और भृकुटियोंको फेकनेकी शोभासे मोल लिये नवीन दासकी समान और सेवा की है आपके चरणकमलोंकी जिन्होंने ऐसे श्रीकृष्णजीके पास जानेमें भ्रम क्यों करती हो १ ॥

**सा ससाध्वससानन्दं गोविन्दे लोललोचना ॥**
**शिञ्जाना मञ्जु मञ्जीरं प्रविवेश निवेशनम् ॥२॥**

पद-सा १ ससाध्वससानन्दम् २ गोविन्दे ७ लोललोचना १ शिञ्जाना १ मञ्जुऽ मञ्जीरम् २ प्रविवेश क्रि० निवेशनम् २ ॥ २ ॥

योजना-ससाध्वससानन्दम् यथा स्यात् तथा गोविन्दे लोललोचना शिञ्जाना मञ्जु मञ्जीरम् सा विवेशनम् प्रविवेश ॥ २ ॥

**भाषार्थ**-भ्रम और आनन्दसहित श्रीकृष्णचंद्रजीके विषे चंचल हैं नेत्र जिसके ऐसी और कोमलमंजीरोंको बजातीहुई वह राधाजी क्रीडाके गृहमें प्रवेश करती भई ॥ २ ॥

अथ द्वाविंशतितमः प्रबन्धो वराडीरागेण रूपकताले गीयते ॥ २२ ॥

राधावदनविलोकनविकसितविविधविकारविभङ्गम्॥ जलनिधिमिव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् १ हरिमेकरसम् चिरमभिलषितविलासम् सा ददर्श गुरुहर्षवशंवदवदनमनङ्गविकासम् ॥ ध्रु० ॥

पद-राधावदनविलोकनविकसितविविधविकारविभङ्गम् २ जलनिधिम् २ इवऽ विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् २ हरिम् २ एकरसम् २ चिरम्ऽ अभिलषितविलासम् २ सा १ ददर्श क्रि० गुरुहर्षवशंवदवदनम् २ अनङ्गविकासम् १ ॥ २ ॥

योजना-सा ( राधा ) राधावदनविलोकनविकसितविविधविकारविभङ्गम् जलनिधिम् इव विधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् एकरसम् चिरम् अभिलषितविलासम् गुरुहर्षवशंवदवदनम् अनङ्गविकासं हरिं ददर्श ॥ १ ॥

**भाषार्थ**-राधाजीके मुखारविंदके देखनेसे प्रकाश हुए हैं नाना प्रकारके कटाक्ष आदि विकारोंकी रचना जिसमें और चंद्रमण्डलके दर्शनसे चंचल हैं ऊँची २ तरंग जिसमें ऐसे समुद्रकी तुल्य और एक राधाजीमेंही है प्रीति जिनकी और चिरकालसे विलासकी है अभिलाषा जिनको और अत्यंत आनंदके अधीन है मुखारविंद जिनका और कामदेवका है प्रकाश जिनमें ऐसे श्रीकृष्णचंद्रजीको वे राधाजी देखती भई ॥ १ ॥

हारममलतरतारमुरसि दधतं परिलम्बितदूरम्॥ स्फुटतरफेनकदम्बकरम्बितमिव यमुनाजलपूरम् ॥ २ ॥

पद—हारम् २ अमलतरतारम् २ उरसि ७ दधतम् २ परिलम्बित-दूरम् २ स्फुटतरफेनकदम्बकरम्बितम् २ इवऽ यमुनाजलपूरम् २॥२॥

योजना—स्फुटतरफेनकदम्बकरम्बितं यमुनाजलपूरम् इव परिलम्बितदूरम् अमलतरतारम् हारम् उरसि दधतं श्रीकृष्णम् सा राधा ददर्श ॥ २ ॥

भाषार्थ—दूरतक लंबायमान और प्रकट फेनके समूहसे मिले यमुनाजलके समान निर्मल हैं मोती जिसमें ऐसे हारको वक्षःस्थलपर धारण करते हुए श्रीकृष्णजीको वह राधा देखती भई ॥ २ ॥

**श्यामलमृदुलकलेवरमण्डनमधिगतगौरदुकूलम् ॥ नील-नलिनमिव पीतपरागपटलभरवलयितमूलम् ॥ ३ ॥**

पद—श्यामलमृदुलकलेवरमण्डनम् २ अधिगतगौरदुकूलम् २ नीलनलिनम् २ इवऽ पीतपरागपटलभरवलयितमूलम् २ ॥ ३ ॥

योजना—श्यामलमृदुलकलेवरमण्डनम् अधिगतगौरदुकूलं पीत-परागपटलभरवलयितमूलं नीलनलिनम् इव हरिं सा ददर्श ॥ ३ ॥

भाषार्थ—श्याम और कोमल है शरीरकी शोभा जिनकी और कुंकुमकी रेणुओंके समूहसे युक्त है मूल जिनका ऐसे नीलकमलके समान और धारण किया है पीतांबर जिन्होंने ऐसे श्रीकृष्णचंद्रजीको वह राधाजी देखती भई ॥ ३ ॥

**तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् ॥ स्फु-टकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ॥ ४ ॥**

पद—तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागम् २ स्फुटकमलो-दरखेलितखञ्जनयुगम् २ इवऽ शरदि ७ तडागम् २ ॥ ४ ॥

योजना—सा तरलदृगञ्चलचलनमनोहरवदनजनितरतिरागं स्फुटकमलोदरखेलितखञ्जनयुगं शरदि तडागम् इव स्थितं श्रीकृष्णं ददर्श ॥ ४ ॥

भाषार्थ—चंचलकटाक्षोंके चलानेसे मनोहरमुखारविन्दसे पैदा की है स्त्रियोंकी अभिलाषा जिन्होंने और खिलेहुए कमलोंके मध्यमें खेलते हुए हैं दो खंजन जिसमें ऐसे शरद ऋतुके तडागके समान श्रीकृष्णचंद्रजीको वह राधा देखती भई ॥ ४ ॥

वदनकमलपरिशीलनमीलितमिहिरसमकुण्डलशोभम् ॥ स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ ५ ॥

पद—वदनकमलपरिशीलनमीलितमिहिरसमकुण्डलशोभम् २ स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् २ ॥ ५ ॥

योजना—वदनकमलपरिशीलनमीलितमिहिरसमकुण्डलशोभं स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभं श्रीकृष्णं सा राधा ददर्श ५॥

भाषार्थ—मुखारविंदके देखनेके लिये परस्पर मिले हुए जो सूर्यके समान कुण्डल उनकी शोभा है जिनके और मन्दमन्द मुसक्यान की कांतिसे सुंदर तथा शोभायमान जो अधरपल्लव उससे पैदा किया है स्त्रियोंके रतिका लोभ जिन्होंने ऐसे श्रीकृष्णजीको वह राधा देखती हुई ॥ ५ ॥

शशिकिरणोच्छुरितोदरजलधरसुन्दरकुसुमसुकेशम् ॥ तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ६

पद—शशिकिरणोच्छुरितोदरजलधरसुन्दरकुसुमसुकेशम् २ तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् २ ॥ ६ ॥

योजना-शशिकिरणोच्छुरितोदरजलधरसुन्दरकुसुमसुकेशं तिमिरोदितविधुमण्डलनिर्मलमलयजातिलकनिवेशं श्रीकृष्णं सा राधा ददर्श ६॥

भाषार्थ-चंद्रमाकी किरणोंसे शोभित है मध्यभाग जिनका ऐसे मेघके समान सुंदर हैं पुष्पसहित सुंदरकेश जिनके और अंधकारमें उदय हुए चंद्रमण्डलके समान निर्मल है मलयगिरिचंदनका मस्तकपर तिलक जिनके ऐसे श्रीकृष्णचंद्रजीको वह राधा देखती भई ॥ ६ ॥

विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिरधीरम् ॥
मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ॥ ७॥

पद-विपुलपुलकभरदन्तुरितं २ रतिकेलिकलाभिः ३ अधीरं २ मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् २ ॥ ७ ॥

योजना-विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिः अधीरं मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरं हरिं सा ददर्श ॥ ७ ॥

भाषार्थ-बडे २ रोमांचोंके अतिशयसे व्याप्त और रतिकी क्रीडाकी कथाओंसे अधीर और मणियोंके किरणोंके समूहसे प्रकाशित जो भूषण उनसे सुभग ( सुन्दर ) है शरीर जिनका ऐसे श्रीकृष्णचंद्रजीको वह राधा देखती भई ॥ ७ ॥

श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ॥
प्रणमत हृदि विनिधाय हरिं भवजलसुकृतोदयसारम् ॥ ८ ॥

पद-श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारं २ प्रणमत क्रि० हृदि ७ विनिधाय ऽ हरिं २ भवजलसुकृतोदयसारम् २ ॥ ८ ॥

योजना-भो भक्ताः यूयं श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारं भवजलसुकृतोदयसारं हरिं हृदि विनिधाय प्रणमत ॥ ८ ॥

भाषार्थ-हे भक्तजनो ! तुम श्रीजयदेवके कथनकी अपेक्षा दुगणे धारण किया है विभाव ( रतिका उद्दीपन ) रूप भूषणोंका भार जिनोंने तथा ऐसे संसाररूपी समुद्रमें पुण्योदयके साररूप हरिको हृदयमें स्थापन करके प्रमाण करो ॥ ८ ॥

अतिक्रम्यापाङ्गं श्रवणपथपर्यन्तगमनप्रयासे-
नेवाक्ष्णोस्तरलतरतारं पतितयोः ॥ इदानीं
राधायाः प्रियतमसमालोकसमये पपात स्वेदा-
म्बुप्रसर इव हर्षाश्रुनिकरः ॥ १ ॥

पद-अतिक्रम्यऽ अपाङ्गम् २ श्रवणपथपर्यन्तगमनप्रयासेन ३ इवऽ अक्ष्णोः ६ तरलतरतारं २ पतितयोः ६ इदानींऽ राधायाः ६ प्रियतमसमालोकसमये ७ पपात क्रि० स्वेदाम्बुप्रसरः १ इवऽ हर्षाश्रुनिकरः १ ॥ १ ॥

योजना-इदानीं प्रियतमसमालोकसमये तरलतरतारं यथा स्यात्तथा अपाङ्गम् अतिक्रम्य श्रवणपथपर्यंतगमनप्रयासेन पतितयोः राधायाः अक्ष्णोः स्वेदाम्बुनिकर इव हर्षाश्रुनिकरः पपात ॥ १ ॥

भाषार्थ-अत्यंत प्यारे श्रीकृष्णचंद्रजीके दर्शनके समयमें इस काल अपांगका अतिक्रमण करके कानोंके मार्गतक गमनके प्रयाससे अत्यंत चंचल हैं पुतली जिनकी ऐसे पतित ( गिरे ) हुए राधेके नेत्रोंमेंसे स्वेदजलके समूहके तुल्य आनंदके आसुओंका समूह पडने लगा ॥ १ ॥

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहितस्मिते
याते गेहाद्बहिरवहितालीपरिजने ॥ प्रियास्यं पश्य-

न्त्याः स्मरशरवशाकूतसुभगं सलज्जाया लज्जा व्यग-
मदिव दूरं मृगदृशः ॥ २ ॥

पद-भजन्त्याः ६ तल्पान्तम् २ कृतकपटकण्डूतिपिहितस्मिते ७ याते ७ गेहात् ५ बहिः ऽ अवहितालीपरिजने ७ प्रियास्यम् २ पश्यन्त्याः ६ स्मरशरवशाकूतसुभगम् २ सलज्जायाः ६ लज्जा १ व्यगमत् क्रि० इव ऽ दूरम् २ मृगदृशः ६ ॥ २ ॥

योजना-कृतकपटकण्डूतिपिहितस्मिते अवहितालीपरिजने गेहात् बहिः याते सति तल्पान्तं भजन्त्याः स्मरशरवशाकूतसुभगं प्रियास्यं पश्यन्त्याः सलज्जायाः मृगदृशः ( राधायाः ) लज्जा दूरं व्यगमत् इव ॥ २ ॥

भाषार्थ-कपटसे की जो कर्ण आदिकी खुजली उससे छिपाई है हंसी जिन्होंने ऐसी सावधान सखियोंका समूह जब घरसे बाहिर चलागया तब शय्यापर प्राप्त हुई और कामदेवके बाणोंकी महिमासे मनोहर श्रीकृष्णजीके मुखारविन्दको देखती हुई और लज्जासहित भी उस मृगनयनी राधाजीकी लज्जा मानो दूर चली गई अर्थात् सखियोंके बाहिर जानेसे उनके संग लज्जा भी लज्जित होकर चली गई ॥ २ ॥

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव ॥ भुजापीडक्रीडा-हतकुवलयापीडकारिणः प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ३ ॥

इति श्रीकविराजश्रीजयदेवकृते गीतगोविन्दे
महाकाव्येऽभिसारिकावर्णने सानन्दगोविन्दो
नाम एकादशः सर्गः ॥ ११ ॥

पद्—जयश्रीविन्यस्तैः ६ महितः १ इवऽ मन्दारकुसुमैः ३ स्वयंऽ सिन्दूरेण ३ द्विपरणमुदा ३ मुद्रितः १ इवऽ भुजापीडक्रीडाहतकुवलयापीडकरिणः ६ प्रकीर्णासृग्बिन्दुः १ जयति क्रि० भुजदण्डः १ मुरजितः ६ ॥ ३ ॥

योजना—भुजापीडक्रीडाहतकुवलयापीडकरिणः मुरजितः जयश्रीविन्यस्तैः मन्दारकुसुमैः महितः इव स्वयं सिन्दूरेण द्विपरणमुदा मुद्रितः इव प्रकीर्णासृग्बिन्दुः भुजदण्डः जयति ॥ ३ ॥

**भाषार्थ**—भुजदण्डोंकी क्रीडासे मारा है कुवलयापीड हस्ती जिसने ऐसे और मुरनामा दैत्यके जीतनेवाले श्रीकृष्णजीका वह भुजदंड सबसे उत्तम है जो जयकी लक्ष्मीके लिये फेंके हुए पारिजातके पुष्पोंसे मानो पूजित है और जो हस्तीके रणके आनंदसे सिंदूरसे मुद्रित ( युक्त ) है और जिसके भुजामें जहां तहां रुधिरकी बिंदु लग रही है ॥ ३ ॥

इति श्रीजयदेवकृते गीतगोविंदे पं० मिहिरचन्द्रकृतभाषाविवृति-
सहिते अभिसारिकावर्णने सानन्दगोविन्दो नाम
एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः १२.

**गतवति सखीवृन्दे मन्दत्रपाभरनिर्भरस्मरशरवशाकूतस्फीतस्मितस्नपिताधराम् ॥ सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लवप्रसवशयने विक्षिप्ताक्षीमुवाच हरिः प्रियाम् ॥ १ ॥**

पद्—गतवति ७ सखीवृन्दे ७ मन्दत्रपाभरनिर्भरस्मरशरवशाकूत-

स्फीतस्मितस्नापिताधरां २ सरसमनसं २ दृष्ट्वाऽ राधां २ मुहुःऽ नवपल्लवप्रसवशयने७विक्षिप्ताक्षीम् २उवाच क्रि०हरिः१ प्रियाम् २॥१॥

योजना-सखीवृन्दे गतवति सति हरिः मदत्रपाभरनिर्भरस्मरशरवशाकूतस्फीतस्मितस्नापिताधरां सरसमनसं मुहुः नवपल्लवप्रसवशयने विक्षिप्ताक्षीं प्रियां राधां दृष्ट्वा( इदं वचनम् ) उवाच ॥ १ ॥

भावार्थ-जब सखियोंका समूह चलागया उस समय श्रीकृष्णचंद्रजी मंद २ लज्जाके भारसे पैदाहुआ जो कामदेवका अधिकबाण उसके आधीन जो अभिप्राय उससे बढेहुये किंचित् हास्यसे युक्त है अधर ओष्ठ जिसका और अनुराग ( प्रीति ) सहित है मन जिसका और नवीन पत्ते और पुष्पोंकी शय्यापर लगे हैं नेत्र जिसके ऐसी अपनी प्यारी राधाको देखकर यह वचन बोले अर्थात् कामदेवके वशीभूत राधाको यह कहने लगे ॥ १ ॥

## अथ त्रयोविंशतितमः प्रबन्धो विभासरागेण एकतालीताले गीयते ॥ २३ ॥

किसलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम् ॥ तव पदपल्लववैरिपराभवमिदमनुभवतु सुवेषम् ॥ १ ॥ क्षणमधुना नारायणमनुगतमनुसर भो राधिके ॥ ध्रु० ॥

पद-किसलयशयनतले ७ कुरु क्रि०कामिनि १ चरणनलिनविनिवेशं २ तव ६ पदपल्लववैरिपराभवम् २ इदम् १ अनुभवतु क्रि० सुवेषं १ क्षणम् २ अधुनाऽ नारायणम् २ अनुगतम् २ अनुसर क्रि० भोऽ राधिके १ ॥ १ ॥

योजना—भो राधिके अधुना क्षणं यथा स्तात्तथा अनुगतं मां नारायणं त्वम् अनुसर ( अनुगच्छ ) हे कामिनि किसलयशयनतले चरणनलिनविनिवेशं त्वं कुरु इदं ( किसलयशयनं ) सुवेशं तव पदपल्लववैरिपराभवम् अनुभवतु ॥ १ ॥

**भाषार्थ**—हे राधे ! इस समय क्षणमात्र अनुकूल हुये नारायणके अनुकूल हो जाओ और अनुकूल होनेका यह प्रकार है कि कमलोंकी शय्याके ऊपर अपने चरणकमलोंको रक्खो और यह कमलोंकी शय्या आपके चरणकमलोंके रखनेसे वैरीके तिरस्कारको जानो अर्थात् तुमारे चरणकमलोंके स्थापनसे कमलोंकी शय्याका तिरस्कार हो, क्योंकि शत्रुके मस्तकपर चरणको रखते हैं ॥ १ ॥

**करकमलेन करोमि चरणमहमागमिताऽसि विदूरम् ॥**
**क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् २॥**

पद—करकमलेन ३ करोमि क्रि० चरणम् २ अहम् १ आगमिता १ असि क्रि० विदूरम् २ क्षणम् २ उपकुरु क्रि० शयनोपरिऽ माम् २ इवऽ नूपुरम् २ अनुगतिशूरम् २ ॥ २ ॥

योजना—हे राधिके यतः त्वम् मया विदूरम् आगमिता असि अतः करकमलेन ते चरणम् अनुकरोमि माम् इव अनुगतिशूरं नूपुरं शयनोपरि क्षणं यथा स्यात्तथा त्वम् उपकुरु ॥ २ ॥

**भाषार्थ**—हे राधे! जिससे आपको मैंने अत्यंत दूरसे बुलाया है इससे मैं आपके चरणोंका अपने करकमलोंसे संवाहन ( दावना ) करूं और शय्याके ऊपर अनुगमन करनेमें शूरवीर नूपुरको मेरे समान उपकृत करो अर्थात् जैसे आलिंगन

आदिसे मेरा उपकार करती हो इसी प्रकार शय्यापर रखनेसे नूपुरका भी उपकार करो ॥ २ ॥

वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् ॥ विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ ३ ॥

पद-वदनसुधानिधिगलितम् २ अमृतम् २ इव० रचय क्रि०वचनम् २ अनुकूलम् २ विरहम् २ इव० अपनयामि क्रि० पयोधररोधकम् २ उरसि ७ दुकूलम् २ ॥ ३ ॥

योजना-वदनसुधानिधिगलितम् अमृतम् इव अनुकूलम् वचनम् त्वम् रचय उरसि पयोधररोधकम् दुकूलम् विरहम् इव अहम् अपनयामि ( दूरीकरोमि ) ॥ ३ ॥

भावार्थ-हे राधे! आप अपने चंद्रमाके समान मुखसे अमृतके तुल्य अनुकूलवचनको कहो और आपके वक्षःस्थलपर स्तनोंका रोधक ( ढकनेवाला ) जो दुकूल है उसको विरहके समान दूर करता हूं अर्थात् जैसे विरहमें स्तनोंका स्पर्श नहीं होता ऐसेही जिस वस्त्रसे भी नहीं होता है इससे आपके दुपट्टे स्तनों परसे उतारता हूं ॥ ३ ॥

प्रियपरिरम्भणरभसवलितमिव पुलकितमन्यदुरापम् ॥ मदुरसि कुचकलशं विनिवेशय शोषय मनसिजतापम् ॥ ४ ॥

पद-प्रियपरिरम्भणरभसवलितम् २ इव० पुलकितम् २ अन्यदुरापं २ मदुरसि ७ कुचकलशं २ विनिवेशय क्रि०शोषय क्रि० मनसिजतापम् २ ॥ ४ ॥

योजना-हे राधे प्रियपरिरम्भणरभसवलितम् इव पुलकितम् अन्य-दुरापं कुचकलशं त्वं मुदसि विनिवेशय मनसिजतापं शोषय ४

भाषार्थ--हे राधे ! मुझ प्यारे श्रीकृष्णचंद्रके आलिंगनार्थ मानो संमुख और रोमांचों सहित और मेरेसे अन्यको दुःखसेभी प्राप्तिके अयोग्य अपने कुचकलशोंको मेरे वक्षःस्थलपर रक्खो और कामदेवके दुःखकी शांति करो क्योंकि जलसहित घटके रखनेसे दुःखकी शांति युक्त ही है ॥ ४ ॥

अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासम् ॥ त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ ५ ॥

पद-अधरसुधारसम् २ उपनय क्रि०भामिनि १ जीवय क्रि० मृतम् २ इव ऽ दासं २ त्वयि ७ विनिहितमनसं २ विरहानलदग्धवपुषम् २ अविलासम् २ ॥ ५ ॥

योजना-हे भामिनि त्वम् अधरसुधारसम् उपनय त्वयि विनिहितमनसं विरहानलदग्धवपुषम् अविलासम् मृतम् इव मां त्वं जीवय॥५॥

भाषार्थ-हे भामिनि ! अर्थात् कामदेवकी क्रीडामें कुशल राधे आप अपने अधरके अमृतरूपी रसको दो और आपमें लगा है मन जिसका और विरहकी अग्निसे दग्ध हुआ है अंग जिसका ऐसा जो निश्चल ( जड ) मृतकके समान मैं हूं उसे जिवायलेवो क्योंकि अमृतके देनेसे मृतकका भी जिवन हो सकता है ॥ ५ ॥

शशिमुखि मुखरय मणिरसनागुणमनुगुणकंठनिनादम् ॥ मम श्रुतियुगले पिकरवविकले शमय चिरादवसादम् ॥ ६ ॥

पद्—शशिमुखि १ मुखरय क्रि॰ मणिरसनागुणम् २ अनुगुणकण्ठनिनादं २ मम ६ श्रुतियुगले ७ पिकरवविकले ७ शमय क्रि॰ चिरात्ऽ अवसादम् २ ॥ ६ ॥

योजना—हे शशिमुखि अनुगुणकण्ठनिनादम् मणिरसनागुणम् त्वं मुखरय पिकरवविकले मम श्रुतियुगले चिरात् अवसादम् शमय ॥६॥

**भाषार्थ**—हे चन्द्रमुखि राधे ! कंठगीतके शब्दकी तुल्य मणिजटितकांची ( कोंदनी ) के दामका शब्द करो और उस शब्दसे चिरकालसे तेरे विरह और कोकिलोंके शब्दसे व्याकुल मेरे दोनों कानोंमें जो दुःख है उसको शान्त करो ॥ ६ ॥

मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् । मीलति लज्जितमिव नयनं तव विरम विसृज रतिखेदम् ॥ ७ ॥

पद्—माम् ३ अतिविफलरुषा ३ विकलीकृतम् २ अवलोकितुम्ऽ अधुनाऽ इदम् २ मीलति क्रि॰ लज्जितम् १ इवऽ नयनम् १ तव ६ विरम क्रि॰ विसृज क्रि॰ रतिखेदम् २ ॥ ७ ॥

योजना—अतिविफलरुषा विकलीकृतम् माम् अवलोकितुम् अधुना लज्जितम् इव तव नयनम् मीलति अतः त्वम् विरम रतिखेदम् विसृज ७

**भाषार्थ**—हे राधे ! यह तेरा नेत्र अत्यंत निष्फल क्रोधसे व्याकुल हुए मुझे देखनेके लिये लज्जितके समान मींचता है इससे आप क्रोधका त्याग करो और रतिके खेदको त्याग दो अर्थात् क्रोधको त्याग कर मेरे संग रमण करो ॥ ७ ॥

श्रीजयदेवकवेरिदमनुपदनिगदितमधुरिपुमोदम् ॥ जनयतु रसिकजनेषु मनोरमरतिरसभावविनोदम् ॥ ८

इति श्रीगीतगोविन्दे त्रयोविंशतितमः प्रबन्धः २३॥

पद--श्रीजयदेवकवेः ६ इदम् १ अनुपदनिगदितमधुरिपुमोदम् १ जनयतु क्रि० रसिकजनेषु ७ मनोरमरतिरसभावविनोदम् ॥ ८ ॥

योजना--अनुपदनिगदितमधुरिपुमोदम् श्रीजयदेवकवेः भणितम् इदम् गीतम् रसिकजनेषु मनोरमरतिरसभावविनोदम् जनयतु ॥ ८ ॥

**भाषार्थ**--पदपदमें कहा है श्रीकृष्णजीका आनंद जिसमें ऐसा श्रीजयदेवकविका कहा हुआ यह गीत शृंगारमें रसिक जनोंको मनोरम जो रतिका रस और भाव ( सात्विक आदि ) विनोद उसको पैदा करो ॥ ८ ॥

इति श्रीगीतगोविन्दे त्रयोविंशतितमः प्रबन्धः ॥ २३ ॥

**प्रत्यूहः पुलकाङ्कुरेण निबिडाश्लेषे निमेषेण च क्रीडा-**
**कूतविलोकितेऽधरसुधापाने कथाकेलिभिः ॥**
**आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभूदु-**
**द्भूतः स तयोर्बभूव सुरतारम्भः प्रियंभावुकः ॥१॥**

पद--प्रत्यूहः १ पुलकाङ्कुरेण ३ निबिडाश्लेषे ७ निमिषेण ३ चऽ क्रीडाकूतविलोकिते ७ अधरसुधापाने ७ तथाऽ केलिभिः ३ आनन्दाधिगमेन ३ मन्मथकलायुद्धे ७ अपिऽ यस्मिन् ७ अभूत् क्रि० उद्भूतः १ सः १ तयोः ६ बभूव क्रि० सुरतारम्भः १ प्रियंभावुकः १ ॥ १

योजना--तयोः श्रीराधाकृष्णयोः प्रियंभावुकः सः सुरतारम्भः उद्भूतः अभूत् यस्मिन् निबिडाश्लेषे पुलकाङ्कुरेण च पुनः क्रीडाकूतविलोकिते निमिषेण अधरसुधापाने कथाकेलिभिः मन्मथकलायुद्धे अपि आनन्दाधिगमेन प्रत्यूहः बभूव ॥ १ ॥

**भाषार्थ**--उन दोनों राधा श्रीकृष्णजीका वह प्यारा सुरत ( संभोगक्रीडा ) का आरंभ प्रकट हुआ जिस सुरतके प्रारंभमें ऐसे गाढालिंगन के करनेमें रोमांचोंके खडे होनेसे और

क्रीडाके समय अभिप्रायपूर्वक देखनेमें पलकोंके चलनेसे और अधरामृतके पान करनेमें कथाओंकी क्रीडासे और कामदेवकी कलासे युक्त रतिके संग संग्रामके करनेमें आनंदकी प्राप्तिसे विघ्न हुआ ॥ १ ॥

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः ॥
हस्तेनानमितः कचेऽधरमधुस्यंदेन संमोहितः
कांतः कामपि तृप्तिमाप तदहो कामस्य वामा
गतिः ॥ २ ॥

पद-दोर्भ्याम् ३ संयमितः १ पयोधरभरेण ३ आपीडितः १ पाणिजैः ३ आविद्धः १ दशनैः ३ क्षताधरपुटः १ श्रोणीतटेन ३ आहतः १ हस्तेन ३ आनमितः १ कचे ७ अधरमधुस्यन्देन ३ संमोहितः १ कान्तः १ काम् २ अपिऽ तृप्तिम् २ आप क्रि० तत्ऽ अहोऽ कामस्य ६ वामा १ गतिः ॥ १ ॥ २ ॥

योजना--यत् दोर्भ्यां संयमितः पयोधरभरेण आपीडितः पाणिजैः आविद्धः, दशनैः क्षताधरपुटः श्रोणीतटेन आहतः हस्तेन कचे आनमितः, अधरमधुस्यन्देन संमोहितः, कान्तः काम् अपि तृप्तिम् आप तत् तस्मात् अहो ( आश्चर्यं ) कामस्य गतिः वामा ( विपरीता ) अस्ति ॥ २ ॥

भाषार्थ-जिससे भुजाओंसे बांधे हुए और स्तनोंके भारसे पीडित और नखोंमें खण्डित और दांतोंसे किया है क्षत अधरोष्ठमें जिसके और कटिके प्रदेशसे ताडित और हाथसे केशोंको पकडकर नम्र ( नमाये ) और अधरामृतके

रससे मोहित हुए भी श्रीकृष्णचंद्रजी किसी (कहनेके अयोग्य) वृत्तिको प्राप्त हुए इससे आश्चर्य है कि कामदेवकी गति विपरीत है जिसमें अप्रियवस्तु भी प्रिय लगती है ॥ २ ॥

**माराङ्के रतिकेलिसंकुलरणारम्भे तया साहसप्रायं कान्तजयाय किंचिदुपरि प्रारंभि यत्संभ्रमात् ॥ निष्पन्दा जघनस्थली शिथिलता दोर्वल्लिरुत्कंपितं वक्षो मीलितमाक्षि पौरुषरसः स्त्रीणां कुतः सिद्ध्यति ? ॥ ३ ॥**

पद-माराङ्के ७ रतिकेलिसंकुलरणारम्भे ७ तया ३ साहसप्रायम् २ कान्तजयाय ४ किंचित्ऽ उपरिऽ प्रारम्भि क्रि० यत्ऽ संभ्रमात् ५ निष्पंदा १ जघनस्थली १ शिथिलिता १ दोर्वल्लिः १ उत्कंपितम् १ वक्षः १ मीलितम् १ आक्षि १ पौरुषरसः १ स्त्रीणां ६ कुतःऽ सिद्ध्यति क्रि० ॥ ३ ॥

योजना-रतिकेलिसङ्कुलरणारम्भे माराङ्के तया राधया यत कान्तजयाय साहसप्रायं यथा स्यात्तथा यत् विपरीतरतं संभ्रमात् प्रारम्भि ( तदैव ) जघनस्थली निष्पन्दा दोर्वल्लिः शिथिलिता वक्षः उत्कंपितम् आक्षि मीलितम् अभूत् अतः स्फुटमस्ति स्त्रीणां पौरुषरसः कुतः सिद्ध्यति ॥ ३ ॥

**भाषार्थ**-माराङ्क (कामदेववाले) रतिक्रीडाके तुमुल(भारी) युद्धमें उस राधाने संभ्रमसे श्रीकृष्णचंद्रजीके जीतनेके लिये किंचित् कालतक ऊपर साहससे विपरीतरतिका जब प्रारंभ किया उसी समय जंघा जड हो गई दोनों भुजा शिथिल और वक्षःस्थल कंपित और दोनों नेत्र भी मीलित ( मीचे ) होगये

इससे प्रतीत होता है कि साहससे प्रारंभ कियाभी स्त्रियोंका पुरुषार्थ कैसे सिद्ध हो सक्ता है अर्थात् नहीं हो सक्ता ॥ ३॥

**तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये दृशौ निर्धूतोऽधरशोणिमा विलुलितस्रस्तस्रजो मूर्धजाः ॥ काञ्चीदाम दरश्लथाञ्चलमिति प्रात- र्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमहो पत्यु- र्मनः कीलितम् ॥ ४ ॥**

पद-तस्याः ६ पाटलपाणिजाङ्कितम् १ उरः १ निद्राकषाये १ दृशौ १ निर्धूताधरशोणिमा १ विलुलितस्रस्तस्रजः १ मूर्द्धजाः १ काञ्चीदाम १ दरश्लथाञ्चलम् १ इतिऽ प्रातर्निखातैः ३ दृशोः ७ एभिः ३ कामशरैः ३ तत् १ अद्भुतम् १ अहोऽ पत्युः ६ मनः १ कीलितम् ॥ १ ॥ ४ ॥

योजना--तस्याः उरः पाटलपाणिजाङ्कितम् अभूत् दृशौ निद्राकषाये अभूताम् अधरशोणिमा निर्धूतः अभूत मूर्द्धजाः विलुलितस्रस्तस्रजः अभूवन् काञ्चीदाम दरश्लथाञ्चलम् अभूत् इति एभिः प्रातर्दृशोः निखातैः कामशरैः यत् पत्युः श्रीकृष्णचंद्रस्य मनः कीलित तत् अहो ( आश्चर्यम् ) अद्भुतम् अभूत् ॥ ४ ॥

**भाषार्थ**-उस राधाका वक्षःस्थल श्वेत और रक्त नखोंसे चिह्नित हुआ और दोनों नेत्र निद्रासे रक्त होगए और ओष्ठोंकी रक्तता धुलगई और केशोंकी माला शिथिल और गिरगई मेखलाका वस्त्र शिथिल होगया इस प्रकार नेत्रोंमें लगे हुए इन कामदेवके बाणोंसे जो श्रीकृष्णचंद्रजीका मन विंधगया यह अद्भुत आश्चर्य हुआ क्योंकि राधा-

जीके नेत्रोंमें लगे हुए बाणोंसे श्रीकृष्णजी मनका विधना आश्चर्य है ॥ ४ ॥

**त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे**
**शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः ॥**
**इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामांचलं**
**राधायाः स्तनकोरकोपरि लसन्नेत्रो हरिः**
**पातु वः ॥ ५ ॥**

पद—त्वाम् २ अप्राप्यऽ मयि ७ स्वयंवरपराम् २ क्षीरोदतीरोदरे ७ शङ्के क्रि० सुन्दरि १ कालकूटम् २ अपिबत् क्रि० मूढः १ मृडानीपतिः १ इत्थम्ऽ पूर्वकथाभिः ३ अन्यमनसः ६ विक्षिप्यऽ वामाञ्चलम् २ राधायाः ६ स्तनकोरकोपरिऽ लसन्नेत्रः १ हरिः १ पातु क्रि० वः २ ॥ ५ ॥

योजना—(भो भक्ताः)हे सुन्दरि राधे मयि स्वयंवरपरां त्वाम् अप्राप्य क्षीरोदतीरोदरे मूढः मृडानीपतिः कालकूटं ( विषम् ) अपिबत् इति अहं शंके इत्थं पूर्वकथाभिः अन्यमनसः राधायाः स्तनकोरकोपरि लसन्नेत्रः हरिः ( श्रीकृष्णचंद्रः ) वः( युष्मान् ) पातु (रक्षतु) ॥५॥

**भाषार्थ**—हे सुंदरि राधे ! मेरे निमित्त स्वयंवरमें तत्पर आपको नहीं प्राप्त होकर क्षीरसागरके मध्यमें मढ महादेवजीने विषका पान किया यह मैं शंका करता हूं इस प्रकार पुरानी कथाओंसे अन्य ( कथा )में दिया है चित्त जिसने ऐसी राधाजीके वामांचल ( हृदयके वामदेशमें लगा वस्त्र ) को दूर करके कोरक ( पुष्पके ) गुच्छे रूप राधाजीके स्तनोंके ऊपर लगे हैं नेत्र जिसके ऐसे हरि हे भक्तजनो ! तुम्हारी रक्षा करो ।

इससे यह प्रतीत है कि गौरीके पति भी महादेवजीने आपके न मिलनेपर विषका पान किया इस लिए पार्वतीसे भी अधिक-गुणवती आप हो ॥ ५ ॥

**व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ कपोलौ स्पष्टा दष्टाधरश्रीः कुचकलशरुचा हारिता हार-यष्टिः ॥ काञ्ची कांचिद्गताशां स्तनजघनपदं पाणि-नाऽऽच्छाद्य सद्यः पश्यन्ती चात्मरूपं तदपि विलु-लितं स्रग्धरेयं धिनोति ॥ ६ ॥**

पद-व्यालोलः १ केशपाशः १ तरलितम् १ अलकैः ३ स्वेदलोलौ १ कपोलौ १ स्पष्टा १ दष्टाधरश्रीः १ कुचकलशरुचा ३ हारिता १ हरियष्टिः १ काञ्ची १ काञ्चित्ऽ गता १ आशां २ स्तनजघन-पदं २ पाणिना ३ आच्छाद्यऽ सद्यःऽ पश्यन्ती १ चऽ आत्मरूपं २ तदपिऽ विलुलितस्रग्धरा १ इयं धिनोति क्रि० ॥ ६ ॥

योजना-यद्यपि केशपाशः व्यालोलः अभूत् अलकैः तरलितं कपोलौ स्वेदलोलौ अभूतां दष्टाधरश्रीः स्पष्टा अभूत् हारयष्टिः कुच-कलशरुचा हारिता अभूत् काञ्ची काञ्चित् आशां गता अभूत् स्तन-जघनपदं पाणिना आच्छाद्य आत्मरूपं पश्यंती विलुलितस्रग्धरा इयं राधा तदपि धिनोति ( प्रीणयति ) श्रीकृष्णम् इति शेषः ॥ ६ ॥

**भाषार्थ**-यद्यपि राधाजीका केशपाश ( बंधन ) ढीला होगया था और केश भी स्थानसे चलित होगये थे और दोनों कपोल स्वेदसे युक्त होगये थे और दांतोंसे डसे हुये अधरोंकी शोभा प्रकट दीखती थी कुचकलशोंकी कांतिसे हारकी शोभा हार मानगयी थी और कांची भी किसी अन्य ही दिशाको

चलीगयी थी ऐसा होनेपर भी अपने स्तन और जंघाओंको हाथसे शीघ्र आच्छादित करके अपने रूपको देखती और मलीन मालाको धारण करती हुई ऐसी राधा थी तो भी श्रीकृष्णचंद्र महाराजको प्रसन्न करती थी अर्थात् शृंगारसे पैदा हुये ये नायिकाके चिन्ह उक्त चिन्होंके कर्ता नायकके प्रसन्नताकारक होते हैं ॥ ६ ॥

ईषन्मीलितदृष्टि मुग्धहसितं सीत्कारधारावशा-
दव्यक्ताकुलकेलिकाकुविकसद्दंतांशुधौताधरम् ॥
श्वासोत्कंपिपयोधरोपरि परिष्वङ्गात्कुरङ्गीदृशो
हर्षोत्कर्षविमुक्तनिःसहतनोर्धन्यो धयत्याननम् ॥ ७॥

पद-ईषन्मीलितदृष्टि २ मुग्धहसितं २ सीत्कारधारावशात् ५ अव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरं २ श्वासोत्कम्पिपयोधरोपरिऽ परिष्वङ्गात् ५ कुरङ्गीदृशः ६ हर्षोत्कर्षविमुक्तनिःसहतनोः ६ धन्यः १ धयति क्रि० आननम् २ ॥ ७ ॥

योजना-श्वासोत्कम्पिपयोधरोपरि परिष्वङ्गात् हर्षोत्कर्षविमुक्तनिःसहतनोः कुरङ्गीदृशः ( स्त्रियाः ) ईषन्मीलितदृष्टि मुग्धहसितं, सीत्कारधारावशात् अव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरम् आननं धन्यः जनः धयति ( पिबति ) ॥ ७ ॥

भाषार्थ-कामदेवसे उत्पन्न हुये श्वासकी खर ( प्रचण्ड ) पवनसे कंपते हुये स्तनोंके ऊपर आलिंगन ( स्पर्श ) से हुयी जो आनंदकी अधिकता, उससे गिरा ( आलस्ययुक्त ) और कार्य करनेमें असमर्थ है शरीर जिनका ऐसी मृगनयना स्त्रीके उस मुखारविंदका जो पान ( चुंबन ) करताहै वह धन्य

( भाग्यवान् ) है जिस मुखारविंदमें कुछ २ नेत्र मीच रहे हों और जिसमें सुंदर हँसी हो. और कामदेवसे उत्पन्न हुये सी २ की धाराके वशसे अप्रकट और व्याकुल जो केलि ( क्रीडा ) उसमें शोक और भयसे काकु शब्द अर्थात् भयके वचन उससे प्रकट हुये ( दीखे ) दांतोंकी किरणोंसे धुला हैं अधरोष्ठ जिसका। भावार्थ यह है कि कुछ २ नेत्रोंको मीचकर प्रेमसे हँसती और सी २ ऐसे अव्यक्त शब्दोंको करती और निर्मल दांत ओष्ठवाली स्त्रीके मुखारविंदको जो मनुष्य भोगके अनंतर पीते हैं वे भाग्यवान् हैं ॥ ७॥

अथ सा निर्गताऽऽबाधा राधा स्वाधीनभर्तृका ॥
निजगाद रतिक्लान्तं कान्तं मण्डनवाञ्छया ॥ ८ ॥
इति च सहसा प्रीतं सुरतान्ते मानिताऽतिखिन्नाङ्गी ॥
राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥ ९ ॥

पद-अथऽ सा १ निर्गताबाधा १ राधा १ स्वाधीनभर्तृका १ निजगाद क्रि०रतिक्लान्तम् २ कान्तं २ मण्डनवाञ्छया ३ ॥ ८ ॥

पद-इतिऽ चऽ सहसाऽ प्रीतं २ सुरतान्ते ७ मानिता १ अतिखिन्नाङ्गी १ राधा १ जगाद क्रि० सादरम् २ इदम् २ आनन्देन ३ गोविन्दम् २ ॥ ९ ॥

योजना-अथ ( अनन्तरं ) निर्गताबाधा स्वाधीनभर्तृका सा राधा रतिक्लान्तं कान्तं मण्डनवाञ्छया निजगाद वचनमिति शेषः ॥ ८ ॥ मानिता अतिखिन्नाङ्गी राधा सहसा सुरतान्ते प्रीतं सादरं गोविन्दम् आनन्देन इति च वचनं जगाद ॥ ९ ॥

भाषार्थ-इसके अनंतर सुरतक्रीडाके अंतमें जाती रही

कामदेवकी आबाधा (पीडा) जिसकी और कुछ २ मंद हास्यसे युक्त और अपने आधीन है भर्ता जिसका और श्रीकृष्णचंद्र-जीने किया है संमान जिसका और खिन्न ( ढीला ) है अंग जिसका ऐसी वह राधाजी रतिक्रीडासे थके, और सुंदर और आदरके कर्ता और अपने पर प्रसन्न श्रीगोविन्दजीके प्रति मंडन ( प्यारके भूषण ) की वञ्छासे ये आनंदके वचन कहने लगी ॥ ८ ॥ ९ ॥

अथ चतुर्विंशतितमः प्रबन्धो रामकरीरागेण यतिताले गीयते ॥ २४ ॥

कुरु यदुनन्दन चन्दनशिशिरतरेण करेण पयोधरे॥
मृगमदपत्रकमत्र मनोभवमङ्गलकलशसहोदरे ॥ १ ॥
निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ध्रु०॥

पद–कुरु क्रि०यदुनन्दन ८ चन्दनशिशिरतरेण ३ करेण ३ पयोधरे ७ मृगमदपत्रकम् २ अत्र ऽ मनोभवमङ्गलकलशसहोदरे ७ निजगाद क्रि०सा १ यदुनन्दने ७ क्रीडति ७ हृदयानन्दने ७ ॥ १ ॥

योजना–हृदयानन्दने यदुनन्दने क्रीडति सति सा ( राधा ) हे यदुनन्दन मनोभवमङ्गलकलशसहोदरे अत्र पयोधरे चन्दनशिशिरतरेण करेण मृगमदपत्रकं त्वं कुरु, निजगाद ( उक्तवती ) ॥ १ ॥

भाषार्थ--चित्तको आनंदके दाता यदुनंदन ( श्रीकृष्णचंद्रजी जिस समय क्रीडा कर रहेथे उस समय उनके प्रति राधाजी यह वचन बोली कि हे श्रीकृष्णचंद्रजी महाराज कामदेवके मंगलकलशके समान इस मेरे पयोधर (स्तन) के ऊपर चंदनके समान शीतल अपने करकमलसे कस्तूरीके पत्रों ( चित्राम ) को

आप करो अर्थात् मेरे स्तनोंपर कस्तूरीका सुंदर चित्र लिखो१।

अलिकुलगञ्जनसञ्जनकं रतिनायकसायकमोचने ॥
त्वदधरचुम्बनलम्बितकज्जलमुज्ज्वलय प्रिय लोचने।२॥

पद--अलिकुलगञ्जनसञ्जनकम् २ रतिनायकसायकमोचने ७ त्वदधरचुम्बनलम्बितकज्जलम् उज्ज्वलय क्रि०प्रिय१ लोचने॥७॥२॥

योजना-हे प्रिय रतिनायकसायकमोचने लोचने अलिकुलगञ्जनसञ्जनकं त्वदधरचुम्बनलम्बितकज्जलं त्वम् उज्ज्वलय(पुनःकुरु)॥२॥

भाषार्थ-हे प्यारे ! श्रीकृष्णचंद्रजी ! महाराज कामदेवके बाणोंको छोडनेवाले मेरे नेत्रोंमें भ्रमरोंके समूहको तिरस्कार करनेवाले और आपके अधरोंके चुंबनसे गलित ( नष्ट ) हुये कज्जलको आप उज्ज्वल करो अर्थात् दुवारा लगाओ ॥ २॥

नयनकुरङ्गतरङ्गविलासनिरोधकरे श्रुतिमण्डले ॥
मनसिजपाशविलासधरे शुभवेष निवेशय कुण्डले॥ ३॥

पद--नयनकुरङ्गतरङ्गविलासनिरोधकरे ७ श्रुतिमण्डले ७ मनसिजपाशविलासधरे ७ शुभवेष १ निवेशय क्रि० कुण्डले २ ॥ ३ ॥

योजना-हे शुभवेष नयनकुरङ्गतरङ्गविलासनिरोधकरे मनसिजपाशविलासधरे श्रुतिमण्डले कुण्डले निवेशय॥ ३ ॥

भाषार्थ-हे सुंदरवेषधारी श्रीकृष्णचंद्रजी महाराज ! मृगरूपनेत्रोंके तरंगों ( चञ्चलगति ) के विलासको रोकनेवाले और कामदेवकी पाशके सदृश जो मेरे कर्ण हैं उनमें कुंडलोंका निवेश करो अर्थात् कानोंमें कुंडल पहनाओ ॥ ३ ॥

भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे ॥
जितकमले विमले परिकर्मय नर्मजनकमलकं मुखे॥४॥

पद्–भ्रमरचयम् २ रचयन्तम् २ उपरि॰ रुचिरम् २ सुचिरम् २ मम ६ सन्मुखे ७ जितकमले ७ विमले ७ परिकर्मय क्रि॰ नर्मजनकम् २ अलकम् २ मुखे ७ ॥ ४ ॥

योजना–हे श्रीकृष्णचंद्र जितकमले विमले सन्मुखे मुखे सुचिरं रुचिरम् यथा स्यात्तथा उपरि भ्रमरचयं रचयन्तं नर्मजनकम् अलकं त्वं परिकर्मय ( मण्डय ) ॥ ४ ॥

**भाषार्थ**–हे श्रीकृष्णचंद्रजी महाराज ! आप जीता है कमल जिसने ऐसे सुंदर मेरे मुखपर ऐसी अलकावलियोंकी शोभाको करो जो मुखके ऊपर भ्रमरोंके समूहकी चिरकाल-तक शोभायमान प्रतीत हो अर्थात् मेरे भ्रमरोंके समान श्याम केशोंको गूंथो ॥ ४ ॥

**मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे ॥**
**विहितकलङ्ककलं कमलानन विश्रमितश्रमसीकरे ॥ ५ ॥**

पद्–मृगमदरसवलितम् २ ललितम् २ कुरु क्रि॰ तिलकम् २ अलिकरजनीकरे ७ विहितकलङ्ककलम् २ कमलानन १ विश्रमितश्रमसीकरे ७ ॥ ५ ॥

योजना–हे कमलानन श्रीकृष्णचंद्र त्वम् विश्रमितश्रमसीकरे अलिकरजनीकरे मृगमदरसवलितम् ललितं विहितकलङ्ककलातिलकं कुरु ॥ ५ ॥

**भाषार्थ**–हे कमलके समान मुखवाले श्रीकृष्णचंद्रजी महाराज ! आप शुष्क होगये हैं स्वेदके जलकणके जिसमें ऐसे मेरे चंद्ररूप मस्तकपर कस्तूरीसे बनाये, और रची है कलंककी शोभा जिसमें ऐसे मनोहर तिलकको करो अर्थात्

चंद्रमाके समान मुखपर कलंककी कलाके सदृश कस्तूरीका तिलक लगाओ ॥ ५ ॥

**मम रुचिरे चिकुरे कुरु मानद मनसिजध्वज-
चामरे॥ रतिगलिते ललिते कुसुमानि शिखण्डि-
शिखण्डकडामरे ॥ ६ ॥**

पद-मम ६ रुचिरे ७ चिकुरे ७ कुरु क्रि० मानद १ मनसिजध्वजचामरे ७ रतिगलिते ७ ललिते ७ कुसुमानि २ शिखण्डिशिखण्डकडामरे ॥ ६ ॥

योजना-हे मानद मम रुचिरे मनसिजध्वजचामरे रतिगलिते ललिते शिखण्डिशिखण्डकडामरे चिकुरे कुसुमानि त्वम् कुरु ( आरोपय )६

**भाषार्थ**-हे मानके देने वा खंडन करनेवाले श्रीकृष्णचन्द्रजी महाराज मेरे शोभायमान और कामदेवकी ध्वजा और चवरके तुल्य और रतिकी क्रीडासे जिसका बंधन छूट गया है और मनोहर और मयूरकी पिच्छके समान है आडंबर ( वेष ) जिनका ऐसे केशोंमें पुष्पोंको गुम्फित करो अर्थात् मेरे बालोंको पुष्पोंसे गुंथो ॥ ६ ॥

**सरसघने जघने मम शम्बरदारणवारणकन्दरे॥ मणि-
रशनावसनाभरणानि शुभाशय वासय सुन्दरे ॥७॥**

पद-सरसघने ७ जघने ७ मम ६ शम्बरदारणवारणकन्दरे ७ मणिरशनावसनाभरणानि २ शुभाशय १ वासय क्रि० सुन्दरे ७ ॥

योजना-हे शुभाशय मम सरसघने शम्बरदारणवारणकन्दरे सुन्दरे जघने मणिरशनावसनाभरणानि त्वं वासय ( आरोपय ) ॥ ७ ॥

**भाषार्थ**-हे अत्यंत उदारचित्त श्रीकृष्णचंद्रजी महाराज

आप मेरे सघन ( भारी ) और शंबरासुरको विदारण करनेवाले हाथीके समान जो कामदेव उसके वासकी कंदरा ( गुहा ) के समान और सुंदर जघनके ऊपर मणियोंसे जटित रशना ( कोंदनी ) और वस्त्रभूषणोंको पहनाओ अर्थात् मेरी पूर्वोक्त जंघाओंके ऊपर उक्त रशनाआदिकोंको सज्जित करो ॥ ७ ॥

श्रीजयदेववचसि शुभदे हृदयं सदयं कुरु मण्डने ॥
हरि चरणस्मरणामृतनिर्मितकलिकलुषज्वरखण्डने ८
इति श्रीगीतगोविंदे चतुर्विंशतितमः प्रबन्धः ॥२४॥

पद–श्रीजयदेववचसि ७ शुभदे ७ हृदयं २ सदयं २ कुरु क्रि० मण्डने ७ हरिचरणस्मरणामृतनिर्मितकलिकलुषज्वरखण्डने ७ ॥८॥

योजना–हे भक्तजन शुभदे मण्डने हरिचरणस्मरणामृतनिर्मित-कलिकलुषज्वरखण्डने श्रीजयदेववचसि त्वं हृदयं सदयं कुरु ॥ ८ ॥

भाषार्थ–हे भक्तजनो ! तुम कल्याणदायक भूषणरूप और परमेश्वरके चरणारविंदके अमृतरूपस्मरणसे किया है कलियुगके पापोंका खंडन जिसने ऐसे श्रीजयदेवके गीतरूप वचनमें अपने हृदयको दयासहित करो अर्थात् दयासहित ( प्रेमपूर्वक ) हृदयसे इस गीतको पढो ॥ ८ ॥

इति श्रीगीतगोविन्दभाषाविवृतौ चतुर्विंशः प्रबन्धः ॥ २४ ॥

रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयोर्घटय
जघने काञ्चीमञ्च स्रजा कबरीभरम् ॥ कलय
वलयश्रेणीं पाणौ पदे कुरु नूपुराविति निगदितः
प्रीतः पीताम्बरोऽपि तथाऽकरोत् ॥ १ ॥

पद-रचय क्रि० कुचयोः ७ पत्रं २ चित्रं २ कुरुष्व क्रि० कपोलयोः ७ घटय क्रि० जघने ७ काञ्चीम् २ अञ्च क्रि० स्रजा ३ कबरीभरं २ कलय क्रि० वलयश्रेणीं २ पाणौ ७ पदे ७ कुरु क्रि० नूपुरौ २ इतिऽ निगदितः १ प्रीतः १ पीताम्बरः १ अपिऽ तथाऽ अकरोत् क्रि० ॥ १ ॥

योजना-हे श्रीकृष्णचन्द्र मम कुचयोः चित्रं रचय कपोलयोः पत्रं कुरुष्व जघने काञ्चीं घटय स्रजा कबरीभरम् अञ्च वलयश्रेणीं पाणौ कलय पदे ( पादयोः ) नूपुरौ कुरु इति निगदितः पीताम्बर ( श्रीकृष्णः ) अपि प्रीतः सन् तथा अकरोत् ॥ १ ॥

भाषार्थ-हे श्रीकृष्णचंद्रजी महाराज ! मेरे कुचोंपर चित्राम रचो, कपोलोंपर पत्रावली बनाओ, और जंघाओंपर क्षुद्रघंटिका ( तागडी ) को बांधो, और पुष्पमालासे मेरी कबरीको शोभित करो अर्थात् केशोंमें पुष्पोंको गुंथो, हाथोंमें कंकणोंको और चरणोंमें नूपुरोंको पहरावो इस प्रकार कहा जिनको ऐसे कथनसे प्रसन्न हुए श्रीकृष्णचंद्रजी भी तैसेही करते भये ॥ १ ॥

**पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रान्तप्रतिबिम्बसङ्कलनया बिभ्रद्वपुर्विक्रियाम् ॥ पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ २ ॥**

पद- पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां ६ गणे ७ संक्रान्तप्रतिबिम्बसङ्कलनया ३ बिभ्रत् १ वपुर्विक्रियां २ पादाम्भोरुहधा-

रिवारिधिसुताम् २ अक्ष्णां ६ दिदृक्षुः १ शतैः ३ कायव्यूहम् १ इवऽ आचरन् १ उपचिताकूतः १ हरिः १ पातु क्रि० वः २ ॥ २ ॥

योजना-भो भक्ताः पर्यंकीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रांतप्रतिबिम्बसंकलनया वपुर्विक्रियां बिभ्रत् पादाम्भोरुहधारिवारिधिसुताम् अक्ष्णां शतैः दिदृक्षुः कायव्यूहम् आचरन् इव उपचिताकूतः हरिः वः ( युष्मान् ) पातु ॥ २ ॥

भाषार्थ-शय्याके स्थानमें किये जो शेषजी उनके फणाओंकी मणियोंके समूहमें संक्रान्त ( पडाहुआ ) प्रतिबिम्बके अन्वय ( संबंध ) से अनेक शरीरोंको धारते हुए और मानो अपने चरणकमलको धारण करनेवाली लक्ष्मीको, सैंकडो नेत्रोंसे देखनेकी इच्छासे अनेक शरीरोंको धारण करते हुए और बढा है कामदेवका भाव जिनको, ऐसे श्रीकृष्णचंद्रजी महाराज हे भक्तजनो ! तुमारी रक्षा करो ॥ २ ॥

यद्गान्धर्वकलासु कौशलमनुध्यानं च यद्वैष्णवं य-
च्छृङ्गारविवेकतत्त्वरचनाकाव्येषु लीलायितम् ॥
तत्सर्वं जयदेवपण्डितकवेः कृष्णैकतानात्मनः सा-
नन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ३ ॥

पद-यत् १ गान्धर्वकलासु ७ कौशलम् १ अनुध्यानं १ चऽ यत् १ वैष्णवं १ यत् १ शृङ्गारविवेकतत्त्वरचनाकाव्येषु ७ लीलायितम् १ तत् १ सर्वम् १ जयदेवपण्डितकवेः ६ कृष्णैकतानात्मनः ६ सानन्दाः १ परिशोधयंतु क्रि० सुधियः १ श्रीगीतगोविन्दतःऽ ॥ ३ ॥

योजना-कृष्णैकतानात्मनः जयदेवपण्डितकवेः यच्च गान्धर्वकलासु कौशलम् च पुनः यत् वैष्णवम् अनुध्यानम् यत् शृङ्गारविवेक-

तत्त्वरचनाकाव्येषु लीलायितं तत् सर्वं सानन्दाः सुधियः श्रीगीतगोविन्दतः परिशोधयन्तु ॥ ३ ॥

**भाषार्थ**—कृष्णके विषे एकरस है मन जिसका ऐसे श्रीजयदेवकविकी जो गान विद्यामें कुशलता है और जो विष्णुका ध्यान है और जो शृंगाररसका विवेक अर्थका ज्ञान और रचनासहित काव्योंमें लीलासे शृंगार आदिका विचार है उस सबको आनंदसहित बुद्धिमान् पण्डितजन श्रीगीतगोविंदग्रंथसे भली प्रकार शोधन करो अर्थात् इन सबका इस गीतगोविंदग्रंथमें विचार करो ॥ ३ ॥

श्रीभोजदेवप्रभवस्य राधादेवीसुतश्रीजयदेवकस्य ॥
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ४

पद—श्रीभोजदेवप्रभवस्य ६ राधादेवीसुतश्रीजयदेवकस्य ६ पराशरादिप्रियवर्गकण्ठे ७ श्रीगीतगोविन्दकवित्वम् १ अस्तु क्रि० ॥ ४ ॥

योजना—श्रीभोजदेवप्रभवस्य राधादेवीसुतश्रीजयदेवकस्य श्रीगीतगोविन्दकवित्वम् पराशरादिप्रियवर्गकण्ठे अस्तु ॥ ४ ॥

**भाषार्थ**—श्रीभोजदेवसे उत्पन्न और श्रीराधादेवीके पुत्र श्रीजयदेवकी जो श्रीगीतगोविंदकी कविता है वह कवियोंमें श्रेष्ठ जो पराशरआदि उनका जो प्रियवर्ग (सभी सज्जन) उनके कण्ठमें अर्पित हो अर्थात् मैं जयदेवकवि इस श्रीगीतगोविंदको उनके कण्ठमें अर्पित करता हूं ॥ ४ ॥

साध्वी माध्वीक चिंता न भवति भवतः शर्करे
कर्कशाऽसि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि
क्षीर नीरं रसस्ते॥माकन्द क्रन्द कन्ताधर धरणि-

तलं गच्छ यच्छन्ति भावं यावच्छृङ्गारसार-
स्वतमिह जयदे(-)वस्य विष्वग्वचांसि ॥ ९ ॥

इति श्रीकविराजश्रीजयदेवपंडितकृतौ गीतगोविंदे
महाकाव्ये प्रीतपीताम्बरो नाम
द्वादशः सर्गः ॥ १२ ॥

पद-साध्वी १ माध्वीक १ चिंता १ नऽ भवति क्रि० भवतः ६ शर्करे १ कर्कशा १ असि क्रि० द्राक्षे १ द्रक्ष्यंति क्रि० के १ त्वाम् २ अमृत १ मृतम् १ असि क्रि० क्षीर १ नीरम् १ रसः १ ते ६ माकंद १ क्रन्द क्रि०कान्ताधर १धरणितलम् २गच्छ क्रि० यच्छन्ति क्रि० भावम् २ यावत्ऽ शृङ्गारसारस्वतम् २ इहऽ जयदेवस्य विष्वग्वचांसि ॥ १ ॥ ९ ॥

योजना-यावत् इह ( संसारे ) जयदेवस्य विष्वग्वचांसि शृङ्गारसारस्वतम् भावं यच्छंति तावत् हे माध्वीक भवतः चिंता साध्वी न भवति हे शर्करे त्वम् कर्कशा असि हे द्राक्षे त्वाम् के द्रक्ष्यन्ति ? अमृत त्वम् मृतम् असि हे क्षीर ते रसः नीरम् हे माकन्द त्वम् क्रन्द हे कान्ताधर त्वम् धरणितलं गच्छ ॥ ९ ॥

भाषार्थ-हे माध्वीक! (सहत) मैं मधुर हूं यह तेरी चिंता ( विचार ) तवतक ठीक नहीं, और हे शर्करे! (मिसरी) तूभी तवतक कठोर कंकरके समान है हे, द्राक्षे ( दाख ) तवतक तुझे भी कौन देखेगा, और हे, अमृत ! ( अंगुर ) वा सुधा तवतक तू भी मृतकके समान है, और हे क्षीर ! ( दूध ) तव तक तेरा रस भी जलरूप है, और हे माकन्द !(आम्र) तवतक तूभी अपनी मधुरताका रोदन शब्द कर और हे कांताधर अर्थात् स्त्रीके अधरोष्ठ तवतक तू भी पातालको चलाजाय

अर्थात् अपनी २ मधुरताके अभिमानको तबतक तुम सब त्याग दो जबतक जयदेवकविके वचन शृङ्गारआदिरसके भावको सर्वत्र दें तात्पर्य यह है कि शृंगार रससे युक्त जयदेवकविके वचनोंके आगे मधु आदिकी मधुरता कुछ भी वस्तु नहीं है५

इति श्रीकविराजश्रीजयदेवकृतगीतगोविन्दे महाकाव्ये पण्डितवररामरक्षाङ्गजपण्डितमिहिरचंद्रकृतभाषाविवृतिसहिते सुप्रीतपीताम्बरो नाम द्वादशः सर्गः ॥ १२ ॥

---

समाप्तश्चायं ग्रन्थः ।

खबाणनन्देंदुमिते पौषे मासि सितेदले ॥ रामक्षाङ्गजेनेयं गीतगोविन्द गावृतिः ॥१॥ भाषायामुक्ता विद्भ्यः पुष्पवन्तेन ( मिहिरचंद्रेण ) दीयते॥ऊनस्य हरिपूर्तिर्हि सामर्थ्यं तेषु विद्यते ॥ २ ॥



श्रीगणेशाय नमः ।

# अथ राधाविनोदकाव्यप्रारम्भः ।



**मालीनो घनमाली मालीनो वनमाली ॥**
**मालीनो बलमाली मालीनोऽवतु माली ॥ १ ॥**

पद–मालीनः १ घनमाली १ मालीनः १ वनमाली १ मालीनः १ बलमाली १ मालीनः १ अवतु क्रि० माली १ ॥ १ ॥

योजना–मालीनः घनमाली मालीनः बलमाली मालीनः माली वनमाली नः ( अस्मान् ) अवतु ( रक्षतु ) । अत्र नः इति अध्याहार्यम् ॥ १ ॥

**श्रीराधाकृष्णपादाब्जे ध्यायं ध्यायमहर्निशम् ॥**
**राधाविनोदकाव्यस्य भाषोद्धरणमीर्यते ॥ १ ॥**

**भाषार्थ**--दर्पणके समान हृदयमें लगी है लक्ष्मी जिनके वा लोकरीतिसे कामकी उत्पत्तिके द्वारा लक्ष्मीमें आसक्त और लक्ष्मीके विषे निराकार होनेसे अनासक्त और जो लक्ष्मीमें अनासक्त हैं और लक्ष्मी तो जिनमें आसक्त है और शोभाको प्राप्त हुए यदु गोप आदिके जो स्वामी हैं अथवा शोभायमान इंद्र आदि देवताओंके जो स्वामी हैं और सुदामारूप पुष्पोंकी मालावाले मालीके जो स्वामी हैं अथवा मरूप शिवजीमें जो आलीन ( एक ) हैं अथवा भ्रमररूप म ( ब्रह्मा ) के जो स्वामी हैं और जो घन ( मेघ ) के समान श्यामरूप हैं और बलभद्रसे जिनकी शोभा है, अथवा बलदेव जिनके सहायक हैं और जो पुष्पमालाको धारण करते हैं ऐसे वनमाली श्रीकृष्णचंद्रजी महाराज हमारी ( श्रोता वक्ताकी ) रक्षा करो अथवा सबसे

पिछले माली इस पदमें मा अली ये दो पद समझने तब सबके अंतर्यामी वनमाली मा ( मां, मेरी ) रक्षा करो और सब अर्थ पूर्वके समान समझने अथवा इसी एक श्लोकसे दश अवतारोंका वर्णन भी कविने किया है कि वन ( जल ) में शोभाको प्राप्त हुए और शंखासुरके नाशक बलसे शोभित मत्स्यरूप भगवान् हमारी रक्षा करो १ वा कूर्मरूप और संपूर्ण भूमिके भारको अपने फणोंपर धारण करनेवाले, बलसे शोभित वनमाली भगवान् हमारी रक्षा करो इस अर्थमें भी वन शब्दका जल अर्थ समझना २ वा वनमें शोभित और सागरमें डूबी हुयी भूमिके उद्धार करनेका जो बल उससे शोभित वराहरूप भगवान् हमारी रक्षा करो ३ वा हिरण्यकशिपुके नष्ट करनेमें जो बल उससे है शोभा जिनकी ऐसे नृसिंहरूप भगवान् हमारी रक्षा करो ४ अथवा अ ( रुद्र ) के समान जिनकी घन ( बडी ) शोभा है वा अघन ( ह्रस्व ) जिनकी शोभा है ऐसे और बलिको छलनारूप बलसे शोभित वामन रूप भगवान् हमारी रक्षा करो !यहां अघनमाली पद समझना५ वा स्वर्गके मार्गको रोककर तीर्थाटन करनेके लिये वनमें भ्रमसे और संपूर्ण क्षत्रियोंके नाशकारी बलसे शोभित परशुरामरूपी भगवान् हमारी रक्षा करो६ वा दंडकारण्य वनमें है शोभा जिनकी और रावणको नष्ट करनेके बलसे है शोभा जिनकी ऐसे रामचंद्ररूपी भगवान् हमारी रक्षा करो ७ वा बलराम इस रामसहित पदसे है शोभा जिनकी अर्थात् बलभद्र जिनका नाम है और श्री-

यमुनाजीके खींचनेमें जो बल उससे जिनकी शोभा है ऐसे बलदेवजी भगवान् हमारी रक्षा करो ८ वा वनमाली अर्थात् शरद ऋतुके मेघकी तुल्य गौर वर्ण और अवन [ रक्षा करनेसे ] है शोभा और बल जिसके ऐसे बुद्धरूप भगवान् हमारी रक्षा करो ९ अथवा म्लेच्छोंका नाश करनेके बलसे है शोभा जिनकी ऐसे कल्किरूप भगवान् हमारी रक्षा करो १० । अन्य सम्पूर्ण पदोंका अर्थ दशों अवतारोंमें समान है । अथवा मोहन जैसे मंत्रका उद्धार इस श्लोकसे कविने वर्णन किया है । कि सामान्य स्वरूप मा ( शक्ति ) के विषै जो आलीन ( मिला ) क्योंकिं स्वरके विना जिसका उच्चारण नहीं हो सकता ऐसा सब व्यंजनोंमें प्रथम जो ककार वह है रूप जिसका और घनसे है मा ( शोभा ) जिसका ऐसा जो घनम ( इंद्र ) उसके बीज ( ल ) को जो प्राप्त हो अर्थात् लकाररूप और मा ( लक्ष्मी ) का बीज जो ( ई ) उसमें व्याप्त और म ( चंद्र ) है आलीन व्याप्त जिसमें अर्थात् बिंदुसे युक्त ऐसा कामदेवका मोहनी मंत्ररूप ( क्लीम् ) हमारी रक्षा करो सोई शारदातिलकमें कहाहै (१) कि जो ईकार और बिन्दुसे युक्त ककार और लकार है वह तीनों जगत्का मोहनकारी कामदेवका बीज है ॥ १ ॥

विधुसुहृद्विरहानलपीडिता विधुसुहृत्तरलानिलपीडिता ॥ विधुसुहृद्वदनाऽऽलिमपीडिता विधुसुहृत्सुगिरोऽकिरदीडिताः ॥ २ ॥

पद--विधुसुहृद्विरहानलपीडिता १ विधुसुहृत्तरला १ अनिल-पीडिता १ विधुसुहृद्वदना १ आलिम् २ अपीडिता १ विधुसुहृत् १ सुगिरः २ अकिरत् क्रि० ईडिताः ॥ २ ॥

योजना--विधुसुहृद्विरहानलपीडिता विधुसुहृत्तरला अनिलपीडिता विधुसुहृद्वदना अपीडिता विधुसुहृत् ( राधा ) आलिं ( सखीं प्रति ) ईडिताः सुगिरः अकिरत् ( उवाच )

**भाषार्थ**-श्रीकृष्णचंद्ररूप प्यारेकी विरहाग्निसे पीडित और कामदेवसे चंचल वा कपूरके समान है हारकी मध्य मणि जिसकी अर्थात् कामदेवकी अग्निसे हारके मोती भी तेजसे हीन जिसके हो रहे हैं और मलयगिरिके पवनसे पीडित और चंद्रमाके तुल्य है मुखारविंद जिसका वा कपूरके समान है श्वेत मुख जिसका और श्रीकृष्णचंद्रसे है पीडा जिसको वा स्तुति भी की है जिसकी ऐसी विधुसुहृत् ( श्रीकृष्णचंद्रजीकी प्यारी ) वह श्रीराधाजी अपनी सखीके प्रति पूजा ( प्रशंसा ) के योग्य ये सुंदरवाणी कहने लगी ॥ २ ॥

उदयते दयते दयते शशी सखि करैरकरैस्तिमि-
राकरः ॥ दिशमिमां चर मां च रमारमं कमल-
कोमललोललोचनम् ॥ ३ ॥

पद--उदयते क्रि० दयते क्रि० दयते क्रि० शशी १ सखि १ करैः ३ अकरैः ३ तिमिराकरैः ३ दिशम् २ इमाम् २ चर क्रि० माम् २ च० रमारमम् २ कमलकोमललोललोचनम् २ ॥ ३ ॥

योजना--हे सखि शशी ( चंद्रः ) उदयते इमां दिशम् दयते ( प्राप्नोति वा कृपयति ) च पुनः अकरैः तिमिराकरैः करैः(किरणैः)

माम् दयते ( हिनस्ति ) अतः त्वम् कमलकोमललोलविलोचनम् रमारमम् प्रति चर ( गच्छ ) ॥ ३ ॥

भाषार्थ--हे सखि चंद्रमा उदय होकर इस आगे दीखती हुई दिशामें अपनी किरणोंसे प्राप्त होता है वा इस दिशापर दया करता है, और अंधकारको नष्ट करनेवाली और दुःख दायी वा उष्ण अपनी किरणोंसे मुझे पीडित करता है इससे हे सखि तुम रमारम ( लक्ष्मीके पति ) और कमलके समान कोमल और चंचल हैं नेत्र जिनके ऐसे श्रीकृष्णचंद्रजीके समीप चल अथवा अंक ( चिह्न ) रूप मलसे युक्त है मस्तक जिसका ऐसा चंद्रमा उदय होता है इससे तू रमारम लक्ष्मीके संगक्रीडा सहित श्रीकृष्णचंद्रके समीप चल अथवा चंद्रमा उदय होकर मुझे चरम अवस्था ( मरण ) को प्राप्त करता है इससे तू मारम ( लक्ष्मीके रमण ) श्रीकृष्णचंद्रजीके समीप चल अथवा क ( सुख ) में मलक ( मलरूप ) अर्थात् दुःखदायी चंद्रमा उदय होताहै इससे तू अमल ( निर्मल ) और चंचलनेत्रधारी श्रीकृष्ण-चंद्रजीमहाराजके समीप चल ॥ ३ ॥

कुमुदबन्धुरबन्धुरबन्धुरः स तनुतेतनुतेतनुतेत-
तः ॥ हिमकरोऽहिमतां हि मतां मतां किमनु
मां सदृशं सदृशं विधोः ॥ ४ ॥

पद--कुमुदबन्धुरबन्धुः १ अबन्धुरः १ सः १ तनुते क्रि० अतनुते तनुतेततः १ हिमकरः १ अहिमताम् २ हिऽ मताम् २ मताम् २ किम् १ अनुऽ माम् २ सदृशम् २ सदृशम् १ विधोः ६ ॥ ४ ॥

योजना–हे सखि कुमुदबन्धुरबन्धुः अबन्धुरः अतनुतेतनुतेततः सः हिमकरः मताम् अहिमताम् मताम् सदृशम् माम् अनु ( उद्दिश्य ) हि ( यत् ) तनुते तत् किं विधोः सदृशम् ( उचितं ) वर्तते विधोः विरहिणीपीडनं किं कुलपरं परागतं माम् अनु वर्तते इत्यर्थः ॥ ४ ॥

भाषार्थ–हे सखि ! कुमुदोंका प्यारा बंधु और शीतल बडा ही पूजा और विस्तारको प्राप्त वह चंद्रमा पूजाके योग्य और ज्ञानसहित मेरेलिये स्वीकार की हुई उष्णताकी जो विस्तृतता है वह क्या चंद्रमाको उचित है अर्थात् विरहीजनको दुःखदेना क्या चंद्रमाके कुलमें परम्परासे चला आया है अथवा शीतल है हाथ जिसका ऐसा और दुष्टोंका नाशक जो अ (श्रीकृष्णचंद्र) है मेरे लिये चंद्रमाकी तुल्य जो उष्णता उसको करताहै वह क्या श्रीकृष्णचंद्रजीको उचित है अर्थात् अनुचितहै ॥ ४ ॥

कमलिनीमलिना मलिनाऽऽलि ना विचलता च
लतासु लताशुभाम् ॥ विधुतभां विधुतां विधु-
भानुभिर्नयनयोरनयोर्नयसीनयोः ॥ ५ ॥

पद–कमलिनीम् २ अलिना ३ मलिना ३ आलि १ नाऽ विच-लता ३ चऽ लतासु ७ लताशुभाम् २विधुतभाम् २ विधुताम् २ विधु-भानुभिः ३ नयनयोः ६ अनयोः ६ नयसि क्रि० इनयोः ६ ॥ ५ ॥

योजना–हे आलि मलिना लतासु विचलता अलिना विधुतां लताशुभां विधुभानुभिः विधुतभाम् इमां कमलिनीम् इनयोः अनयोः नयनयोः किं ना नयसि ( न दूरीकरोषि ) ॥ ५ ॥

भाषार्थ–हे आलि ! ( सखि ) मलिन (श्याम) लताओंमें भ्रमतेहुए भ्रमरकी त्यागी और श्रेष्ठलतारूप और चंद्रमाकी

किरणोंसे नष्ट है कान्ति जिसकी ऐसी इस कमलिनीको इन मेरे बडे २ नेत्रोंके आगेसे क्यों नहीं दूर करती अथवा मलिन काले श्रीकृष्णचंद्रजीकी त्यागीहुई और गोपियोंमें श्रेष्ठ चंद्रमाकी किरणोंसे दुःखित मुझे हे सखि ! क्या तू नहीं देखती इससे कृष्णके लिवानेको तुम गमनकरो ॥ ५ ॥

**सखि विभाति विभाऽतिविभाऽविभा न सरसी सरसारससारसैः ॥ अलिकुलैर्विधुना विधुता धुता विनमदब्जमुखी विमुखि स्थिता ॥ ६ ॥**

पद-सखि १ विभाति क्रि० विभा १ अतिविभा १ अविभा १ नऽ सरसी १ सरसारससारसैः ३ अलिकुलैः ३ विधुना ३ विधुता १ धुता १ विनमदब्जमुखी १ विमुखी १ स्थिता १ ॥ ६ ॥

योजना-हे सखि विभा अतिविभा अविभा सरसारससारसैः अलिकुलैः विधुना विधुता धुता विनमदब्जमुखी विमुखी स्थिता, इयं सरसी न विभाति ॥ ६ ॥

**भाषार्थ**-हे सखि ! नष्ट है कांति जिसकी और पक्षियोंकी शोभासे रहित और श्रीकृष्णकी कान्तिके तुल्य और विलाससहित शब्दोंके कर्ता सारस भ्रमरोंका समूह चंद्रमा इनकी त्यागी और नमते हुए हैं कमलोंके मुख जिसमें ऐसी पराङ्मुख टिकी हुई यह सरसी ( छोटासा सरोवर ) शोभायमान नहीं दीखती अर्थात् ऐसीको देखकर अत्यन्त दुःख होता है इससे श्रीकृष्णचंद्रको लाओ ॥ ६ ॥

**कुमुदिनीदयितो दयितानतां निजकरैरकरैर्दहति**

**स्फुटम्॥यदयमेकपदे विपदेऽभवद्विकचपुष्करिणी-हरिणीदृशः ॥ ७ ॥**

पद–कुमुदिनीदयितः १ दयितोनताम् २ निजकरैः ३ अकरैः ३ दहति क्रि०स्फुटम् २ यत्ऽ अयम् १ एकपदे ७ विपदे ७ अभवत् क्रि० विकचपुष्करिणीहरिणीदृशः ६ ॥ ७ ॥

योजना-यत् अयं चन्द्रः विकचपुष्करिणीहरिणीदृशः विपदे एकपदे अभवत् अतः कुमुदिनीदयितः चन्द्रः अकरैः निजकरैः दयितानेतः दहति इति स्फुटम् ॥ ७ ॥

**भाषार्थ–**हे सखि जिससे यह चंद्रमा खिली हुई कमलिनी रूपकांताकी विपत्तिके लिये क्षणमात्र उदयको प्राप्त हुआ इससे कुमुदिनीका पति ( प्यारा ). यह चंद्रमा दुःख दायी अपनी किरणोंसे पतिवियोगसे शून्य स्त्रीको दग्ध करता है यह स्पष्ट है ॥ ७ ॥

**विधुरिता धुरि ता धुरिता दहन्विधुरयं जनितो जनितोऽङ्कभृत् ॥ इह तदाक्षिगते क्षिगतेऽब्जिनी रविमतिर्विमतिर्निमिमील सा ॥ ८ ॥**

पद–विधुरिताः १ धुरि ७ ताः १ धुरिताः १ दहन् १ विधुः १ अयम् १ जनितः १ जनितः १ अङ्कभृत् १ इहऽ तत्ऽ आक्षिगते ७ क्षिगते ७ अब्जिनी १ रविमतिः १ विमतिः १ निमिमील क्रि० सा १ ॥ ८ ॥

योजना–ताः धुरिताः विधुरिताः धुरि दहन् सन् अयं विधुः यः जनितः ( जन्मतः ) अङ्कभृत् जनितः तत् ( तस्मात् ) क्षिगते इह चन्द्रमसि आक्षिगते सति विमतिः रविमतिः सा अब्जिनी निमिमील८

**भाषार्थ–**मुख्यताको प्राप्त हुई उन प्रसिद्ध विरहिणीको

दग्ध करता हुआ यह चंद्रमा जन्मसेही कलंकी जिससे उत्पन्न हुआ इससे क्षीणताको प्राप्त हुए इस चंद्रमाको देखते ही अत्यन्त बुद्धिमती और सूर्यमें है बुद्धि जिसकी ऐसी वह कमलिनी मींचती भई क्योंकि कलंकीको देखकर नेत्रोंको मीचनेके अनन्तर सूर्यका दर्शनही प्रायश्चित्त है ॥ ८ ॥

मलयपन्नगपन्नगमण्डलीकवलितो वलितो नु वनानिलः ॥ अदयमङ्गमदङ्ग मदङ्गकं दहति यद्भ्रमयद्भ्रमयन्नयम् ॥ ९ ॥

पद—मलयपन्नगपन्नगमण्डलीकवलितः १ वलितः १ नु ऽ वनानिलः१ अदयम् २ अङ्गमत् १ अङ्ग १ मदङ्गक १ दहति क्रि० यत् ऽ भ्रमयत् १ भ्रमयन् १ अयम् १ ॥ ९ ॥

योजना—हे अङ्ग सखि यत् अयम् अङ्गमत् वनानिलः भ्रमयन् सन् भ्रमयत् मदङ्गकम् अदयं यथा स्यात् तथा दहति तस्मात् नु ( निश्चयेन ) वलितः वनानिलः मलयपन्नगपन्नगमण्डलीकवलितः( पीतः ) अभूत् इति शेषः ॥ ९ ॥

**भाषार्थ**—हे सखि! जिससे अङ्गके मथनेवाला और भ्रमको पैदा करता हुआ यह वनका वायु भ्रमसहित मेरे इस छोटेसे अंगको निर्दय होकर दग्ध करता है इससे यह निश्चयसे प्रतीत होता है कि चलाहुआ वनका पवन मलयगिरिके जो समीपके पर्वत उनमें बसते हुय सर्पोंने पीलिया अर्थात् उनका विष इस वनके पवनमें मिल रहा है अन्यथा मेरे शरीरमें दाह और भ्रम न होता ॥ ९ ॥

अयि रसालवनी नवनी रनीरनवनी नवनीपवनी-
वती ॥ अलिकुलालिकुलाऽलिकुलाकुला प्रति
हिमामहिमामहिमा हिमा ॥ १० ॥

पद-अयिऽ रसालवनी १ नवनी १ रनीः १ अनवनी १ नवनी पवनीवती १ अलिकुलालिकुला १ अलिकुलाकुला १ प्रतिऽ हिऽ माम् २ अहिमाम् २ अहिमा १ हिमा १ ॥ १० ॥

योजना-अयि ( कोमलसम्बोधनम् ) हे सखि नवनी अनवनी नवनीपवनीवती अलिकुलालिकुला अलिकुलाकुला अहिमा हिमा या रसालवनी सा हि ( निश्चयेन ) अहिमाम् मां प्रति रनीः अस्तीति शेषः ॥ १० ॥

भाषार्थ-हे सखि ! नवीन और नये कदंबके हैं वृक्ष जिसमें और मेरे पीडनमें तत्पर और भ्रमरोंके स्थान जो मेघ उनके निवासी कोकिलोंका समूह जिसमें वसता है और भ्रमरोंके समूहसे जो युक्त है और जो सर्पके समान भयानक वा दुःखदायी है और शीतल ऐसा भी यह रसाल ( आम्र ) का वन श्रीकृष्णचंद्रके विरहसे उष्ण ( संतप्त ) हुयी मेरे लिये अग्निके समान संतापको देनेवाला है। अर्थात् वियोगमें शीतलवस्तु दुःख देती हैं ॥ १० ॥

बकुलमाकुलमालि परागितं मधुपरागपरागपरा-
लिभिः ॥ विशदशारदशारदशारदं शशकलङ्ककल-
ङ्ककलङ्कितम् ॥ ११ ॥

पद-बकुलम् १ आकुलम् १ आलि १ परागितम् १ मधुपराग-

परागपरालिभिः ३ विशदशारदशारदशारदम् १ शशकलङ्ककलम् १ ककलङ्कितम् १ ॥ ११ ॥

योजना–हे आलि (सखि) परागितम् मधुपरागपरागपरालिभिः आकुलम् विशदशारदशारदशारदम् शशकलङ्ककलम् ककलङ्कितम् बकुलम् दृश्यते इति शेषः तत् मे दुःखदम् इति भावः ॥ ११ ॥

**भाषार्थ**–हे आलि सुरभित और मधुके कणोंको पीकर प्रीतिसे गानेवाले जो भ्रमर उनसे आकुल (युक्त) और सुखसे रहित हैं दशा जिनकी ऐसे विरही जनोंको दुःख-दायी और दश प्रकार कामदेवकी अवस्थाओंसे स्त्रियोंके सुखको जो भोग रहे हैं उनके संतापका नाशक अर्थात् वियोगियोंको दुःखदायी और सुखियोंके तापका नाशक और चन्द्रमाकी कलङ्क (मलीन) कलाके समान हैं कांति जिसकी और वायुसे कँपायमान ऐसा यह बकुल (मोरसरीका वृक्ष दीखता है। अर्थात् इसके देखनेसे श्रीकृष्णचंद्रजीके वियोगमें मुझे दुःख होता है ॥ ११ ॥

**नवमशोकमशोकमशोकदे सुरभितारभितालिर-**
**तारतम् ॥ सखि स माश्रयमाश्रय माश्रयः**
**कमलिनीमलिनीप इवाऽऽगतम् ॥ १२ ॥**

पद–नवम् २ अशोकम् २ अशोकम् २ अशोकदे १ सुरभितारभितालिरतारतम् २ सखि १ सः १ माश्रयम् २ आश्रय क्रि० माश्रयः १ कमलिनीम् २ आलिनीपः १ इव आगतः १ ॥ १२ ॥

योजना–हे अशोकदे त्वम् नवम् अशोकम् शोकनाशक ) सुरभितारभितालिरतारतम् माश्रयम् अशोकम् ( वृक्षम् ) आश्रय, यतः हे

सखि सः माश्रयः कमलिनीं प्रति अलिनीपः इव आगतः इति त्वम् जानीहि इति शेषः ॥ १२ ॥

भाषार्थ–हे शोकको नाशनेवाली सखि ! नवीन और शोकके नाशक और सुगंधसे पुष्पोंमें रमते हुये भ्रमरोंको रतिके सुखका दाता और शोभासे युक्त जो यह अशोकका वृक्ष है उसका आश्रय ले अर्थात् वहां चल ऐसा करनेसे त यह समझ कि वह लक्ष्मीके पति ( श्रीकृष्णचंद्र ) इस प्रकार आया कि भ्रमरीकी पति ( भ्रमर ) कमलिनीके समीप चला जाता है अर्थात् लक्ष्मी को भोगकर श्रीकृष्णचंद्र तेरेही समीप आ जांयगे ॥ १२ ॥

**सखि हिताऽसिमताऽसि मताऽऽत्थ मां नवमशोक-**
**मशोकमशोकदाम् ॥ तदिहमामवमामव माममां**
**व्रज हरिं नवनीरदनीरदम् ॥ १३ ॥**

पद–सखि १ हिता १ असिमता १ असि क्रि० मता १ आत्थ क्रि० माम् ३ नवम् २ अशोकम् २ अशोकम् २ अशोकदां तत्ऽ इहऽ मामवम् ३ आम्ऽ अव क्रि० माम् २ अमाम् २ व्रज क्रि० हरिं २ नवनीरदनीरदम् २ ॥ १३ ॥

योजना–हे सखि यस्मात् त्वम् अशोकदां माम् प्रति नवम् अशोकम् अशोकम् आत्थ अतः त्वम् पूर्वम् हिता अपि इदानीं असिमता मता असि तत् ( तस्मात् ) आम् ( अङ्गीकारे ) त्वम् इह मामकम् नवनीरदनीरदम् हरिं व्रज अमां माम् अव ( रक्ष ) ॥ १३ ॥

भाषार्थ–हे सखि ! जिससे तैंने श्रीकृष्णचंद्रको शोकका दायक मेरे प्रति नवीन और श्रीकृष्णचंद्रको शोकदायी अशोकका वर्णन किया (नाम लिया) इससे प्रथम हित (प्यारी)

भी मैं असि ( खड्ग ) के समान मनोरथवाली मानी ( जानी ) तिससे लक्ष्मी और ब्रह्मासे सेवित और कामी और नवीन मेघकी जो निरंतर शोभा उसको प्राप्त (घनश्याम) श्रीकृष्णचंद्रके समीप जा और श्रीकृष्णचंद्रसे है शोभा जिसकी ऐसी मेरी रक्षा करो। अर्थात् श्रीकृष्णचंद्रके वियोगसे दुर्बल मेरी श्रीकृष्ण-चंद्रजीको लाकर रक्षा करो। और अशोकका नाम मत ले॥१३॥

**इति सखी गदिताऽगादिताऽदिताऽनवनराय वराय वराय वा ॥ इति गिरं कलया कलया कला पटु गिरा मृदुतामृदुताद्रुता ॥ १४ ॥**

पद्--इतिऽ सखी १ गदिता १ अगदिता १ अदित क्रि० अनवन-राय ४ वरायवराय ४ वाऽइतिऽ गिरम् २ कलया ३ कलया ३ कला १ पटुऽ गिरा ३ मृदुतामृदुताद्रुता ३ ॥ १४ ॥

योजना--राधया इति (पूर्वोक्तप्रकारेण) गदिता कला (एतन्नाम्नी) सखी अगदिता वा ( इव ) अनवनराय वरायवराय ( श्रीकृष्णाय ) कलया कलया मृदुतामृदुताद्रुता गिरा इति ( वक्ष्यमाणां ) गिरं पटु यथा स्यात्तथा अदित ( ददाति स्म ) ॥ १४ ॥

**भाषार्थ**--राधाजीने इस प्रकार कहा है जिसको ऐसी वह कला नामकी सखी अपनी चतुराईसे विना सिखाईके समान पुराणपुरुष और श्रेष्ठ श्रीकृष्णचंद्रजीके प्रति सुखकी दाता और गंभीर और नम्रता और कठोरताते दुःखकी दाता जो वाणी है उससे चतुराईके ये वचन कहती भई अर्थात् ऐसे वचन कहे जिनसे राधाजीका भेजना वा सीख प्रतीत न हो और श्रीकृष्णचंद्रजीका आगमन भी हो जाय ॥ १४ ॥

**मलयजं तनुतेऽतनु ते तनौ सहचरी नलिनी नलिनी दलम् ॥ सुनयना नलदं नलदं च सा तदपि सीदति सीदति बन्धुता ॥ १५ ॥**

पद-मलयजं २ तनुते क्रि० अतनु २ ते ६ तनौ ७ सहचरी १ नलिनी १ नलिनीदलं २ सुनयना १ अनलदं २ नलदं २ चऽ सा १ तदपिऽ सीदति क्रि०सीदाति क्रि०बन्धुता १ ॥ १५ ॥

योजना-हे श्रीकृष्ण ते सहचरी यद्यपि तनौ अतनु मलयजं तनुते ते नलिनी सा तनौ नलिनीदलं तनुते ते सुनयना सा अनलदं नलदं तनौ तनुते तदपि ( तथाऽपि ) सा सीदति च पुनः बन्धुता ( सखिवर्गः ) अपि सीदति दुःखोपायकरणेऽपि तस्या दुःखं नापैति अतस्त्वं गच्छेति सख्यभिप्रायः ॥ १५ ॥

**भाषार्थ**-हे श्रीकृष्णचंद्रजी महाराज ! आपकी सहचरी ( राधाजी ) अपने शरीरमें यद्यपि बहुतसा मलयागिरिचदन लगाती है और कमलिनीके समान आपकी प्यारी वह बहुतसे कमलिनीके पत्ते शरीरपर रखती है और सुंदर नयन ( नेत्र ) वाली वह आपकी प्यारी तापके नाशक उशीर ( खस ) को देहपर लगाती हैं तथापि वह आपकी प्राणप्यारी श्रीराधाजी और उसकी संपूर्ण सखियोंका समूह आपके विना दुःखी हैं अर्थात् दुःखका उपाय करनेपर भी उनके दुःखकी शांति नहीं है इससे आपको चलना उचित है ॥ १५ ॥

**समुदितेमुदितेमुदितेक्षणे हिमकरे मकरेनकरे श्रुती ॥ पिकरवेऽवरवेवर वेति सा हरिणलाञ्छन-लाञ्छनलाञ्छना ॥ १६ ॥**

पद-समुदिते ७ असुदिते २ असुदिता १ ईक्षणे २ हिमकरे ७ मकरेनकरे ७ श्रुती २ पिकरवे ७ अवरवा १ ईवर १ वऽ इतिऽ सा १ हरिणलांछनलांछनलांछना ॥ १ ॥ १६ ॥

योजना-हे ईवर ( लक्ष्मीपते ) मकरेनकरे हिमकरे समुदिते सति असुदिता सा ते प्रिया ईक्षणे ( नेत्रे ) असुदिते करोति पुनः अवरवा व उक्ता हरिणलांछनलांछनलांछना सा ते प्रिया पिकरवा समुदिते सति श्रुती ( कर्णौ ) असुदिते करोति चंद्रोदये सति नेत्रे निमीलयति पिकरवे सति अव ( रक्ष ) व इति एकाक्षरेणापि शिव शिव इति जपतीत्यर्थः ॥ १६ ॥

भाषार्थ-हे लक्ष्मीके पति श्रीकृष्णचंद्रजी महाराज ! वह आपकी सहचरी ( सखी ) श्रीराधाजी समुद्रके सुखदायक चंद्रमाके उदय होनेपर उदासीन होनेके अनंतर नेत्रोंको मीच लेती है और जिस समय कोकिलोंका शब्द होता है तब अव ( रक्षा करो ) और शिव इस संपूर्ण शब्दके स्थानमें व इस आधे ही शब्दका उच्चारण करके शिव २ इस मंत्रको जपती है अर्थात् चंद्रोदयके होतेही राधाजीके नेत्र मीचते हैं और कोकिलोंके शब्द होनेपर हे परमेश्वर रक्षा करो २ और अधूरे शिव २ शब्दको जपती है अर्थात् राधाजीको आपका वियोग असह्य है इससे आप चलो और अपनी प्राणप्यारीकी रक्षा करो ॥ १६ ॥

न सहते सहते सह ते सखी तव वियोग वियोग-
मयोगहत ॥ सपदि तां तरुणीं सरणिं मणिं
किरतु नाम नवं नवनीविजम् ॥ १७ ॥

पद्–नऽ सहते क्रि० अऽ सहते क्रि० अऽ सह १ ते ६ सखी १ तव ६ वियोग १ वियोगम् अयोगहृत् १ सपदिऽ। ताम् २ तरुणीम् २ सरणिम् २ मणिम् २ किरतु क्रि० नामऽ नवम् २ नवनीविजम् ॥ २ ॥ १७ ॥

योजना–हे सह हे वियोग हे अयोगहृत् अर्थात् हे शांतचित्त हे गरुडासन हे कठिनहृदय श्रीकृष्णचंद्र यतः ते सखी तव वियोगं न सहते न अ(।)सहते अतः तां ( मनःस्थाम् ) तरुणीं सपदि भवान् किरतु ( त्यजतु ) सरणिम् ( राधाकुञ्जमार्गम् ) किरतु ( क्षिपतु ) च पुनः नवं नवनीविजं मणिं नाम ( निश्चयेन ) किरतु ( क्षिपतु ) मनसि वर्तमानाम् अन्यां त्यक्त्वा राधाकुञ्जगमनानंतरं राधायाः नवीनवस्त्रस्थितनवीनमणिक्षेपणेन तस्या निजवियोगजन्यदुःखशांति-स्त्वयाऽनुष्ठेयेति सख्यभिप्रायः १७ ॥

**भाषार्थ**–हे क्षांतरूप हे गरुडवाहन हे कठोरचित्त श्रीकृष्ण-चंद्रजी महाराज! वह आपकी सखी श्रीराधाजी जिससे आपके वियोगको नहीं सहती नहीं सहती ( यहां दुःखी होकर दोबार कथन किया है इससे उस मनमें टिकी तरुणी [जवान] गोपीको आप शीघ्रही त्याग दो ) और राधाकुंजके मार्गमें चलो और श्रीराधाजीके वस्त्रमें स्थित जो नवीनमणि उसका क्षेपण ( फेंकना ) करो अर्थात् मनमें स्थित गोपीको त्याग और राधाकुंजमें चलकर राधाजीके वस्त्रमें बँधी हुयी नवीन मणिको फेंक २ राधाजीके संग क्रीडा करो ॥ १७ ॥

अथ तया कलया कलया शुभां वनजदामजदा-
मजदीप्तिमान् ॥ हरिरगात्तमगात्तमगाच्च सा
मुदमतीवमतीव दृशोः स्थितम् ॥ १८ ॥

पद–अथ ऽ तया ३ कलया ३ कलया ३ शुभां २ वनजदामजदामजदीप्तिमान् १ हरिः अगात् क्रि० तम् २ अगात्तम् २ अगात् क्रि० च ऽ सा १ मुदम् २ अतीवम् २ अतीव ऽ दृशोः ७ स्थितम् १॥ १७

योजना–अथ ( अनन्तरं मङ्गलं वा ) वनजदामजदामजदीप्तिमान् हरिः कलया तया कलया सह शुभां ( श्रीराधाम् ) अगात् च पुनः सा ( राधा ) दृशोः स्थितम् अतीवं तं ( श्रीकृष्णं ) वीक्ष्य अतीव मुदम् अगात् आनन्दिता अभूदित्यर्थः ॥ १८ ॥

**भाषार्थ**–इसके अनंतर वा मंगलकी बात है कमलोंके समूहकी मालाके तुल्य है कांति जिनकी ऐसे वे श्रीकृष्णचंद्रजी प्रसन्नचित्त उस कला सखीके संग राधिकाजीके समीप गये और वह राधिकाजीभी गोवर्धनधारी कोमलस्वभाव और अपने नेत्रोंके आगे स्थित उन श्रीकृष्णचंद्र महाराजको देखकर अत्यंतही आनंदको प्राप्त होती भई ॥ १८ ॥

**रामचन्द्रकविना कविनाऽदः पूरुषोत्तमसुतेनसुतेन ।
राधिकाहृदयशोकदमासीद्राधिकाहृदयशोकदमासीत् ॥ १९ ॥**

पद–रामचंद्रकविना ३ कविना ३ अदः १ पूरुषोत्तमसुतेनसुतेन ३ राधिकाहृदयशोकदम् आसीत् क्रि० राधिकाहृदयशोकदमासीत् १।१९

योजना–कविना पूरुषोत्तमसुतेन सुतेन रामचन्द्रकविना कृतं राधिकाहृदयशोकदमासीत् अदः काव्यं राधिकाहृदयशोकदम् आसीत् । राधाहृदयशोकनाशकमभूदित्यर्थः ॥ १९ ॥

**भाषार्थ**–ब्रह्मा शिव विष्णु वायु अग्नि सूर्य इनके सेवक और पुरुषोत्तमके पुत्र (जनार्दन) के ज्येष्ठ पुत्र रामचंद्र कविने राधाजीके शोककी नाशक जो कला और चंद्रमा विष्णु

वायु मधु कामदेव इनका है वर्णन जिसमें और राधाजीके हृदयमें जो शोक उसका नाशक यह काव्य ( राधाविनोद ) रचकर समाप्त किया ॥ १९ ॥

**इति श्रीपुरुषोत्तमात्मजजनार्दननन्दनरामचन्द्रकविकृतं राधाविनोदाख्यं काव्यं सटीकं समाप्तम् ॥**

इति श्रीहरिद्वारदक्षिणप्रान्तवृत्तिलांखग्रामनिवासिश्रीपण्डितवरहरिसहायाङ्गजश्री पं० रामरक्षात्मजकाशीस्थराजकीयप्रधानपाठशालोत्तीर्णभारतधर्ममहामण्डलमहोपदेशक पं० मिहिरचंद्रकृता श्रीरामचन्द्रकविकृतगूढार्थराधाविनोदकाव्यभाषोद्धृतिः पूर्णतामगात् ॥

क्षेमराजेरितेनेयम्भाषायामुद्धृतिः कृता । राधाविनोदकाव्यस्य पुष्पवन्तेन धीमता ॥ १ ॥ खबाणनन्देन्दुमिते पौषमासे सिते दले । समाप्य चार्पिता विज्ञः स्खलतेर्ज्ञापिका हि ते ॥ २ ॥

॥ मङ्गलमस्तु ॥

४५८७६

पुस्तक मिलनेका ठिकाना.

| | |
|---|---|
| गंगाविष्णु श्रीकृष्णदास, "लक्ष्मीवेङ्कटेश्वर" स्टीम् प्रेस, कल्याण-मुंबई. | खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" स्टीम् प्रेस, खेतवाडी-मुंबई. |

